# पीठिका.

क्षोणीमण्डलमण्डनायितमहीशूराभिधांचत्पुरे ।
श्रीमच्चाममहीपतिर्विजयते सिह्मासनाधीश्वरः ॥
यस्स्वीयैर्मधुरैर्गुणैस्सह जगत्कर्णेषु नित्याटनात् ।
कर्णाटक्षितिपालइत्यभिहित स्सर्वैस्सदाश्लाघ्यते ॥१॥
यस्यारम्भः प्रकृतिमहितस्सत्यमार्गैकतानो ।
यस्यक्षान्तिर्भवति महतांयोगिनामप्यलभ्या ॥
चेतोयस्य भ्रमरतिसदा पादपद्मेमुरारे-
र्यस्योत्साहश्श्रुतिविहितसत्संप्रदायाभिवृद्धौ ॥२॥

तस्यखलु महाराजाधिराजस्य श्रीमतश्चामराजेन्द्रस्य शासनानुसारेण द्विगुणितोत्साहैः कैश्चिल्लौकिकैर्वैदिकैश्च महद्भिर्विद्वद्भिः—संसदिसमालोच्य, इदानींकिलकाले स्वयमितरविद्यासंप्रदायादीनामतिप्रचारतया वेदशास्त्रविहितसंप्रदायमार्गाणांविरळप्रचारतयाच कालक्रमेण स्वयमार्यमतसंप्रदायाः श्रुतिमात्रगोचरीभवेयुः, अतस्तदभिवर्धनोपायः परिचिन्तनीयः, इदंखलु महाराजपरिपाल्यमानमास्थानं, अत्रकिल बहवः प्रबन्धयितारःप्रबोधयितारःप्रचारयितारःप्रोत्साहयितारश्च प्रकाशन्ते, तदत्रायमारम्भः प्रथमतः किंचित्प्रवर्तितश्चेत् तत्रतत्रदेशान्तरेपि तेतेमहान्तः स्वयमितोप्यतिशयेन प्रबन्धयन्तः

प्रबोधयन्तःप्रचारयन्तःप्रोत्साहयन्तश्च प्रवर्तेरन्, ततश्च स्वयमार्यमतसंप्रदायाः प्रचुरप्रचाराः प्रवर्धेरन्, अतस्तदनुकूलमार्गनिश्चिचीषुभिरस्माभिरिदानीं नानाविधप्रभेदशालिनांतत्तदार्यमतानां परस्पराविरुद्धमार्गेण सर्वजनाभिमतं निखिलधर्ममार्गज्ञानमार्गप्रदर्शकं दृढतरमभ्यस्यतामार्यबालानां स्वतस्तत्तद्ग्रंथसमवलोकनपाटवोत्पादकं सुललितमखिलशास्त्रतत्त्वाभिव्यंजकं निखिलसंशयभंजकं सकलहृदयानुरंजकंच कंचिद्ग्रंथं कारयित्वा तत्तद्भाषान्तरेण परिवर्तयित्वा तत्रतत्रपाठयित्वाच प्रचारः परिकल्पनीयः,—इतिनिरणायि. तदनुग्रन्थकरणाय श्रीमन्महाराजानुज्ञया समभावि. ततः—

श्रीमच्चामममहीन्द्रमन्त्रिमणिना शेषाद्र्यभिख्यावता।
दर्बार्बक्षिपदांकितेन नरसिंह्मार्येणचोत्साहितः ॥
तत्सभ्यैश्च तदा प्रचोदितमतिश्श्रीरामनामाकवि—
र्बालानामुपयोगिनं वितनुते तत्त्वावबोधोद्यमं ॥ ३ ॥
श्रुतिस्मृतिपुराणेतिहासाद्यर्थान् सुविस्तृतान् ।
सोहं संगृह्य रचयाम्यार्यधर्मप्रकाशिकां ॥ ४ ॥

अत्रखलुग्रन्थे—प्रवृत्तिधर्मविषयान्पूर्वभागत्वेन निवृत्तिधर्मविषयानुत्तरभागत्वेनच विभज्य तत्तत्प्रकरणानि तदन्तराळनिरूपणानिचेति तेतेविषयाः सूचीपत्रे समसूचिषत. तेचसर्वेविषयाः विस्तृतोद्दामेषु श्रुतिस्मृति-

पुराणादिषु तत्तद्भाष्यतद्विवरणादिषु तत्तन्निबन्धनग्रन्थादिषुच विप्रकीर्णतया दुरवगाहाअपि सुललितमेकत्र सप्रमाणास्समग्राहिषत. तानिचप्रमाणानि प्रसन्नगम्भीराणि सर्वाण्यार्षाण्येव संगृह्य क्वचित्क्वचित्तत्तद्ग्रन्थस्थितानुपूर्व्यश्च समगृह्यन्त. तदेतत्सर्वमपि तत्तत्पुटग्रन्थमधोऽधः तदनुरूपकुसुमरेखाचिह्नै स्समसूचि.

एषचग्रन्थः तैर्नरसिंह्याचार्यैः तत्तन्महाजनाभिप्रायबुभुत्सया प्रथमतः कतिचिदेवपुस्तकानि मुद्रापयित्वा भारतवर्षभूषणीभूततत्तन्महाजनोपकण्ठमनीयत. ततःकाशीक्षेत्रवासिनः ब्रह्मश्रीविराजमानाः कैलासभट्टाचार्याः राममिश्रशास्त्रिणः गंगाधरशास्त्रिणश्च, तत्रत्यपाठशालाध्यक्षप्रभृतयश्च, चन्नपुरीस्थिताः राजश्रीविराजमानाः पण्डितभाष्याचार्याः शेषगिरिशास्त्रिगः दिवान्बहद्दूर्रघुनाथरायाः शिवशंकरपाण्डचप्रमुखाश्च, कल्याणपुरीस्थिताः ब्रह्मश्रीविराजमानाः गोपालशास्त्रिणः वासुदेवशास्त्रिणः रायबहद्दूर्श्रीनिवासाचार्यप्रमुखाश्च, गोकर्णक्षेत्रस्थितब्रह्मश्रीगणेशसुब्रायशास्त्रिप्रभृतयश्च, तदन्येचतेतेमहान्तः, स्वयममुंग्रन्थमामूलाग्रमालोक्य सएषग्रन्थस्सर्वजनसम्मत स्सकलजनोपकारक्षमश्चेत्यादिस्वाभिप्रायान् तत्रतत्रयोजनीयांशांश्च केचिदनुमोदपत्रिकाप्रदानमुखेन केचित्कुशलपत्रिकामुखेन केचिद्वृत्तान्तपत्रिकामुखेनच—प्राचीकटन्. ताश्चपत्रिकाः कतिचित् एतत्पुस्तकान्तिमपत्रेषु प्रकाशयिष्यन्ते.

ततश्च—श्रीमन्महीशूरमहाराजसदा^५-स्थानभूषणायमानाः ब्रह्मश्रीविराजमानाः धर्माधिकारिणः काशीरामशास्त्रिणः ध० चक्रवर्त्यय्यंगार्याः ध० नरसिंहशास्त्रिणः सुंदरशास्त्रिणः व्यासकृष्णाचार्याः सीतारामशास्त्रिणः वासुदेवशास्त्रिणश्चेति तएतेआस्थानपंडिताः, श्रीमन्महाराजानुज्ञया स्वकीयपारमार्थिकधियाच समुत्साहिताः इमामार्यधर्मप्रकाशिकां तत्रतत्रपरिशोध्य सकललोकोपकारक्षमीचक्रुः.

तत्तन्महाजनाभिप्रायानुसारेण साधुपरिशोध्य द्वितीयमुद्रणामापादितोयंग्रन्थः आर्यमततत्त्वजिज्ञासूनां उपयुक्तस्स्यादेवेति प्रत्येमि.

एतत्पुस्तकसमीकरणविषये महीशूरपुरीस्थितराजकीयहौणविद्यानिलयोपाध्याय बि ये मक्कारिरायप्रमुखाश्च महान्तः बहुधासाहाय्यकमकार्षुः. अतस्तत्तन्महाजनविषये सुतरां कृतज्ञतामनुवर्ते.

अस्मिन्पुस्तके मद्बुद्धिप्रमादवशान्मुद्रणप्रमादवशाद्वा यःकोपिदोषस्संदृश्यतेचेत् तदिदंपुस्तकमालोकयन्तोमहान्तः तंसमीकृत्यबोधयन्तो मम दयेरन्निति भूयोभूयस्संप्रार्थये.

मंडिकल्रामशास्त्री,

मैसूरु शारदाविलासपाठशालाध्यक्षः.



# विषयसूचिका.

---

## उत्तरभागे.

श्रीरस्तु.

# आर्यधर्मप्रकाशिका.

## पूर्वभागः.

## पुरुषार्थनिरूपणप्रकरणं.

*यस्मादिदं जगदजायत यत्रतिष्ठ-
त्यन्तेसमस्तमिदमस्तमुपैति यत्र ।
तस्मै नमस्सदसदादिविकल्पशून्य-
चैतन्यमात्रवपुषे पुरुषोत्तमाय ॥

श्रुतिस्मृतिपुराणेतिहासाद्यर्थान् सुविस्तृतान् ।
तांस्तान् संगृह्य रचयाम्यार्यधर्मप्रकाशिकाम् ॥

इह खलु चराचरात्मके प्रपंचे दुर्लभं मानुषजन्म समासादितवतां तादृशजन्मप्रयोजनापादकविवेकसम्पादनमावश्यकं. अन्यथा पशुपक्ष्यादितिर्यग्जन्तुजालवदविवेकित्वादात्मघातुकत्वं स्फुटीभवेदेव.

उक्तंच—

†प्राप्यचाप्युत्तमं जन्म लब्ध्वाचेन्द्रियसौष्ठवं ।
न वेत्त्यात्महितं यस्तु स भवेदात्मघातुकः इति ॥

---

*विष्णुपुराणे अं. १, अ. १. †भारते शांतिपर्वणि अ. १७५.

तच्च प्रयोजनं स्वानुकूलतया वेदनीयं फलं. सएव पुरुषार्थ इत्युच्यते.

सूत्र्यतेहि—

*फलंचपुरुषार्थइति.

सच पुरुषार्थश्चतुर्विधः धर्मार्थकाममोक्षाइति.

## धर्मनिरूपणम्.

तत्र धर्मोनाम भगवदाराधनरूपः. भगवदाराधनन्तु सत्कार्यानुवर्तनासत्कार्यनिवर्तनात्मकमेव.

पठ्यतेहि—

†यत्तु पृच्छसि भूपाल कथमाराध्यते हरिः ।
तदहं सकलं तुभ्यं कथयामि निबोध मे ॥

ब्राह्मणः क्षत्रियोवैश्यश्शूद्रश्च पृथिवीपते ।
स्वधर्मतत्परो विष्णुमाराधयति नान्यथा ॥

परापवादं पैशुन्यमनृतंच नभाषते ।
अन्योद्वेगकरं वापि तोष्यते तेन केशवः ॥

परदारपरद्रव्यपरहिंसासु योरतिं ।
नकरोति पुमान् भूप तोष्यते तेन केशवः ॥

---

*जैमिनिसूत्रे अ, ४. †विष्णुपुराणे अं. ३, अ. ८.

यथात्मनि च पुत्रेच सर्वभूतेषु यस्तथा ।
हितकामो हरिस्तेन सर्वदा तोष्यते सुखम् ॥

यस्य रागादिदोषेण नदुष्टं नृप मानसं ।
विशुद्धचेतसा विष्णुस्तोष्यते तेन सर्वदा ॥

वर्णाश्रमेषु येधर्माश्शास्त्रोक्ता मुनिसत्तम ।
तेषुतिष्ठन्नरोविष्णुमाराधयति नान्यथेति ॥

## अर्थनिरूपणम्.

अर्थस्तु विद्याधनपुत्रमित्रकळत्रादिवस्तुसमृद्धिः. साच सद्धर्मसाधिकाचेज्जन्मसाफल्यापादिका भवति. अन्यथा बाधिका भवति.

## कामनिरूपणम्.

काम्यतेजनैरिति कामस्स्वयमनित्यसुखरूपंफलं. तदेव श्रेयोभ्युदयादिशब्दैर्व्यवह्रियते. तच्चसुखंद्विविधं ऐहिकमामुष्मिकंचेति. तत्रैहिकं अत्रत्यविषयोपभोगजन्यंसुखं. आमुष्मिकंस्वर्गादि.

## मोक्षनिरूपणम्.

मोक्षोनाम मुचल्मोक्षणइत्यस्माद्धातोः भावार्थकसप्रत्ययान्तपदबोध्योऽयं आध्यात्मिकाधिभौतिकाधिदैविकानां त्रिविधदुःखानामात्यन्तिकीनिवृत्तिः.

श्रूयतेहि—

*दुःखेनात्यन्तं विमुक्तश्चरति. अशरीरंवाव सन्तं नप्रियाप्रिये स्पृशतः. †तरतिशोकमात्मविदितिच.

सूत्रितञ्च सांख्याचार्यैः—

‡अथत्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थइति.

अनुमन्यतेच नैयायिकैरप्येकविंशतिदुःखध्वंसो मोक्ष इति. अङ्गीक्रियतेचैवमेव सर्वैस्तत्तन्मतानुसारिभिरपि.

तत्र जरामरणक्षुत्पिपासाद्याधयो व्याधयश्चाध्यात्मिका दुःखविशेषाः. चोरव्याघ्रशत्रुसर्पादिजन्या अपाया आधिभौतिकाः. अशनिनिपातादिजन्या विपद आधिदैविकाः. एतादृशदुःखनिवृत्तिरेव नित्यानन्दरूपेणावस्थाने पर्यवस्यन्ती मुक्तिकैवल्यनिर्वाणश्रेयोनिश्श्रेयसामृतादिशब्दैर्व्यवह्रियते. स एष मोक्षएव सर्वैस्सम्पादनीयः नित्यः परमपुरुषार्थः.

§श्रूयतेहि तन्नित्यत्वं—न स पुनरावर्ततइति.

एवं धर्मार्थकाममोक्षाश्चत्वारःपुरुषार्थाः. एष्वन्तिमयोर्द्वयोस्साक्षात्सुखरूपत्वात्स्वतःपुरुषार्थत्वं. धर्मार्थ

---

*गादाधर्यां मुक्तिवादे उदाहृतं. †छान्दोग्ये प्र, ७. ख, १.

‡सांख्यसूत्रे अ, १. §निरालंबोपनिषदि.

योस्तु स्वतस्सुखरूपत्वाभावेपि तत्साधनत्वादेव पुरुषार्थत्वव्यपदेशः. अर्थकाममोक्षेषु त्रिष्वपिसाधनत्वात् धर्मस्याद्यपुरुषार्थत्वं. अर्थस्यतु धर्मद्वारैवामुष्मिकसुखसाधनत्वात् द्वितीयपुरुषार्थत्वमित्यादिज्ञेयं.

अभिधीयतेचधर्मस्य पुरुषार्थत्वरीतिर्माधवाचार्यैः—

* अभिमतफलसाधनत्वंहि धर्मस्य हितत्वमिति.

अभिमतफलसाधनत्वन्तुधर्मस्यश्रूयतेहि—

† धर्मोविश्वस्यजगतःप्रतिष्टा लोकेधर्मिष्टं प्रजाउपसर्पन्ति धर्मेणपापमपनुदति धर्मेसर्वंप्रतिष्ठितं तस्माद्धर्मं परमंवदन्तीति.

धर्मपरिपन्थचधर्मः. तावेव धर्माधर्मौ अदृष्टं सुकृतदुष्कृते दैवं दिष्टं भागधेयं भाग्यंनियतिर्विधिरित्यादिशब्दैर्व्यवह्रियेते. तयोश्च धर्माधर्मयोर्वैषम्यं न चक्षुरादिवाह्येन्द्रियैर्गृह्यते किन्तु सुखदुःखादितत्फलवैषम्यवशात् अवगम्यते.

धर्माधर्मयोश्चफलं भगवंतंपरमात्मानमन्तरा नसम्भवति. लोके यथा कश्चिद्राजा सदसत्कर्मकारिणोस्तत्तत्कर्माणि निमित्तीकृत्य तत्तदनुरूपं फलं ददात्येवं भगवानपि ददातीति ज्ञेयं.

इति पुरुषार्थनिरूपणम्.

---

* पराशरमाधवीये अ, १. † तैत्तरीयांभस्य पन्ने ब. ८९.

# भगवत्स्वरूपनिरूपणप्रकरणम्.

सच भगवान्निरूप्यते. लोकेहि नामरूपादिविशिष्टं यद्यद्दृश्यते श्रूयतेच तत्तत्प्रपंचसृष्टेः पूर्वमपि विद्यमानमखण्डानन्दात्मकं यच्चैतन्यं तदेव भगवत्स्वरूपं.

श्रूयतेहि—

*इदंवा अग्रेनैव किञ्चनासीत्. †सदेव सोम्येदमग्र आसीत्. ‡विज्ञानमानन्दंब्रह्मेति. §आत्मावा इदमेकएवाग्रआसीत् नान्यत्किञ्चन मिषदित्यादिच्च.

तच्च स्वरूपमेव ब्रह्मपरब्रह्मात्मपरमात्मविष्णुशिवसदाशिवज्योतिस्तेजोधाममहइत्यादिशब्दैः व्यपदिश्यंते. तथाच सच्चिदानन्दात्मकःपरमात्मेतिज्ञेयं. तस्य परमात्मनस्सर्वतःपरिपूर्णत्वात् गगनस्येवाग्रेभागः पश्चाद्भागः पार्श्वभागइत्यादिदिग्व्यवस्थानास्ति. अभूदस्तिभविष्यतीति कालव्यवस्थापि नास्ति.

किंचायमात्मा घटादिवदत्रास्तिनास्तीति चक्षुरादिभिर्गोचरयितुं नशक्यते. यथाहि लोके भोजनेसति

---

*याजुषब्राह्मणे अष्टक २. पन्न २. †छान्दोग्ये प्र. ६, ख. २.
‡बृहदारण्ये ५; ब्रा. ९. §ऐतरेये अ, ६. ख, १.

जायमानातृप्तिः नदृश्यते नस्पृश्यते नाघ्रायतेच किन्तु स्वस्वानुभवमात्रवेद्या भवति तथैव ब्रह्मापीति ज्ञेयं.

श्रूयतेहि—

*यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणि-पादं। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा इति.

तस्य परमात्मनोनिरवयवतया निर्गुणतया च नित्यत्वं ज्ञायते.

गीयतेहि—

†अनादित्वान्निर्गुणत्वात्परमात्मायमव्यय इति.

तस्य परमात्मनः पावकस्योष्णतेवोष्णांशोर्दीधितिरिव चन्द्रस्य चन्द्रिकेव कदाप्यनपायिनी स्वभावप्रभावमाहात्म्याद्दिपर्यायपदबोध्याच. (१) काचिच्छक्तिर्वर्तते. तादृशशक्तियुक्तः परमात्मा स्वयं निर्गुणोपि निरञ्जनोपि सकलजगदधीश्वरइति. (२) जोघुष्यमाणः प्रभायुक्तस्सूर्यः प्रकाशकतामिव पत्नीयुक्तःपुमान् प्रजोत्पादकतामिव सकलजगत्कर्तृत्वादिकं (३) अभिप्रपद्य क्लेशकर्मविपाकाशयादिभिर्गुणैरपरामृष्टः (४) सकलहेय-

---

*मुंडके ख, १.     †गीता १३.

प्रत्यनीकानन्तकल्याण (५) गुणैकतानश्चेति जगति सकलैर्जनैर्जेगीयते.

श्रूयतेहि यथाक्रमं—

*(१) नतस्यकार्यं करणञ्चविद्यते नतत्समश्चाभ्यधिकश्च दृश्यते । परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञानबलक्रियाच;

†(२) मायान्तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरं.

‡(३) एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणिच । खंवायुर्ज्योतिरापःपृथिवी विश्वस्य धारिणी.

§(४) यआत्माअपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासः (५) सत्यकामस्सत्यसंकल्पस्सोऽन्वेष्टव्यः सविजिज्ञासितव्यः इति. एवं--

*अपाणिपादो जवनोगृहीता पश्यत्यचक्षुस्सशृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमित्यादिच.

स एवंभूतःपरमात्मा स्वयमेकोपि गगनवत्सर्वव्यापकः सकलान्तर्यामीच सन् अस्मदादीनां कायिकान्

---

*श्वेताश्वतरे अ, ६. †श्वेताश्वतरे अ, ४.

‡द्वितीयमुंडके ख, १ §छांदोग्ये प्र, ८. ख, ७.

वाचिकान्मानसिकांश्च गुणदोषात्मकव्यापारानखिलानपि साक्षात्कुर्वाणस्साक्षीचसन् विद्योतते.

श्रूयतेहि—

*एकोदेवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षस्सर्वभूताधिवासः साक्षीचेता केवलोनिर्गुणश्चेति.

तथाच—(१) स सकलभुवनकर्ता (२) सकलभुवनभर्ता (३) सकलभुवनहर्ता (४) सर्वनियामकः (५) सर्वज्ञः (६) सर्वव्यापकः (७) परमकारुणिकः (८) सर्वातिशायिमहिमाच परमात्मा स्वयमेकोपि तत्तत्कार्यवशात् बहुधाच अभिधीयते.

श्रूयतेहि—

†एकमेवाद्वितीयं ब्रह्म. ‡सएकधाभवति त्रिधा भवति पञ्चधाभवति सप्तधाभवति नवधाभवतीत्यादि. एवं.—

§इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्ससुपर्णोगरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वा-

---

*छान्दोग्ये प्र. ७. ख. २६. †छान्दोग्ये प्र. ६. ख. २.
‡छान्दोग्ये प्र, ६. ख, २३. §ऋग्वेदे अ, २. अ, ३. व, २२.

नमाहुः, *सुपर्णं विप्राः कवयोवचोभिरेकं संतं बहुधा कल्पयन्ति. इतिच.

पठ्यतेच—

†सृष्टिस्थित्यन्तकरणात् ब्रह्मविष्णुशिवात्मिकां ।
स संज्ञां याति भगवान् एकएव जनार्दन इति ॥

किंच—

‡कटकमकुटकर्णिकादिभेदैः
कनकमभेदमपीष्यते यथैकं ।
सुरपशुमनुजादिकल्पनाभिः
हरिरखिलाभिरुदीर्यते तथैकः इतिच ॥

तदेतत्सर्वं सृष्टिप्रकरणे विशेषतः व्यक्तीभविष्यति.

तस्य भगवतोवासुदेवस्य सकलजगत्कर्तृत्वादित्रयं श्रूयतेहि—

§(१)यतोवा इमानि भूतानि जायन्ते.
(२)येनजातानिजीवन्ति.
(३) यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति.

एवं-सकलभुवननियामकत्वादिकं तैस्तैः कारणैर-

---

*ऋग्वेद अ, ८. अ, ६. व, १६. †विष्णुपु अ, १. अ, २.
‡विष्णुपु अ, ३, अ, ६. §तैत्तरीयेभृगुवल्ल्यां अनु, १.

प्यवगम्यते. तथाहि—

(४) सकलनियामकत्वनिरूपणं.

दृश्यमानमिदं जगत् राज्यवत् कस्यचिन्नियामकस्य अधीनं सदैव प्रवर्तते. अन्यथा न भूमण्डलं ध्रियेत, न नद्यस्स्यन्देरन्, न समुद्रस्सकलभूकबळनाद्विरमेत्, न सूर्यः प्रभायात्, न वायुः प्रवायात्, न पर्जन्यः प्रवर्षेत्, तस्माद्भगवन्नियमनवशादेव एतत्सर्वं सम्भवतीति असंदिग्धमवगन्तव्यमेव.

श्रूयतेच—

*भीषास्माद्वातःपवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पंचमः इति.

एतस्यवा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृतेतिष्ठतइत्यादिच.

(५) सर्वज्ञत्वनिरूपणं.

प्रश्यत लोके कस्यचित्पदार्थस्य निर्माणकर्ता प्रथमतः तत्स्वरूपमखिलं जानाति, तत इच्छति, ततः प्रयतते, तथैव जगद्विधाता भगवानपीति स सकलजगत्स्वरूपज्ञानवानिति परिज्ञायते. अपरंच—यथावा सक-

*तैत्तरीयेआनन्दवल्ल्यां अनु, ८.

लशब्दशास्त्रमर्यादाकूलंकषाष्टाध्यायीनिर्माणकर्ता भगवान्पाणिनिः तद्गततत्तद्विषयविशेषज्ञानवान् तदधिकज्ञानवांश्चेति निश्चीयते तथा स्थावरजंगमात्मकनानाविधप्रभेदप्रपंचितप्रपंचस्वरूपनिरूपकवेदप्रथमप्रकाशन—कर्ता भगवान्परमेश्वरोपि सकलजगद्विषयकज्ञानवान् वेदाधिकज्ञानवांश्चेति निश्चीयते. तदेव तस्य सर्वज्ञत्वमिति सकलैर्जनैस्समुद्घुष्यते.

श्रूयतेच—

*यस्सर्वज्ञस्सर्वविदिति.

गीयतेच—

†वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चनेति ॥

(६) सर्वव्यापकत्वनिरूपणं.

एवं—यथाहि पुष्पेगन्धः यथाचेक्षुरसेमाधुर्यं यथाच पयसिधावल्यं यथैवाग्नावुष्णता यथैव वाय्वाकाशादिरस्मासु तथैव भगवान् सकलं जगत् व्याप्यावतिष्ठते.

श्रूयतेहि—

‡सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवान् तस्मात्सर्वगतश्शिवःइति.

---

*द्वितीयमुंडके ख. २. †गीता अ. ७. ‡श्वेताश्वतरे अ, ३.

*यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेपिवा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित इतिच.

गीयतेच—

†विष्टभ्याहमिदंकृत्स्नमेकांशेन स्थितोजगदिति।

परमकारुणिकत्वनिरूपणं.

एवं-पश्यतेदं उर्वरादौ बीजाद्यावापपर्यन्तमेव अस्मदादिषु स्वातन्त्र्यं ततोमिषत्स्वेवास्मासु दुष्प्रापाण्यपि पयांसि परिकल्प्य तैस्तानि शिशूनिव मन्दमन्दमासिञ्चन् तानिबीजानि अंकुरितीकृत्य द्विदळितीकृत्य पल्लवितीकृत्य पुष्पितीकृत्य फलितीकृत्य भगवानस्मदुपयोगाय कल्पयति, तेनचान्नेन मेदोमज्जास्थिमांसादीनि वर्धयन् तत्तत्कार्यसाधकं शरीरमुपकल्पयति. किंच-द्रष्टुं दृष्टी श्रोतुं श्रवणे रसयितुं रसनां मंतुं मनः बोद्धुं बुद्धिं कर्तुं करौ पत्तुं पादौ पातुं पितरौ त्रातुं पुत्रान् रंजयितुं राजानं वेदयितुं वेदान् शासयितुं शास्त्राणिचेति सर्वसाधनानि दत्वा अस्माननुगृण्हाति स सर्वेश्वरः. एतादृशे भगवति कोवा कृतघ्नोपि परमकारुणिकत्वं नानुमन्येत.

*यजुर्वेदे अंभस्यपन्ने अनु, १३. †गीतायां अ, १०.

## (८) महामहिमत्वनिरूपणं.

आलोचयतेदं—कतिवा गिरयः कतिवा तरवः कतिवा मरवः कतिवा नद्यः कतिवा समुद्राः कतिवा जलचराः कतिवा भूचराः कतिवा खेचराः कतिवा पुरुषाः कतिवा परुषाः कतिवा चतुराः कतिवाऽ-चतुराः तानिसर्वाणि भिन्नाभिन्नजातीयानि भिन्नाभिन्नाकाराणि भिन्नभिन्न-गुणान्वितानि परस्परोपयोगीनिच कृत्वा सर्वाण्यपि सफलान्येवारचय्य जगदिन्द्रजालमिव दर्शयन् हरिः महामहिमशालीति स्फुटीभवत्येव.

गीयतेच—

*आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव
चान्यः ।
आश्चर्यवच्चैनमन्यश्शृणोति श्रुत्वाप्येनं वेद न
चैव कश्चिदिति ॥

एवंभूतस्सभगवान् स्वभक्तानुग्रहमेव परमप्रयोजनं मन्वानः तत्तद्भजनानुरूपं फलं ददाति.

गीयतेहि भगवता—

†ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं ॥

---

*गीता अ, २.    †गीता अ. ४.

*अनन्याश्चिन्तयन्तोमां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमिति ॥

तस्मादस्माभिरेतादृशे भगवति कृतज्ञैर्विधेयैः भक्तिमद्भिर्भजनशीलैः तदेकायत्तचित्तैस्तदनुग्रहसम्पादनैकपरैः तदाज्ञापरिपालनैकजागरूकैस्सत्यमार्गानुवर्तिभिश्च भवितव्यं.

तदेतत्सर्वं विस्मृत्य वयमन्यथाप्रवर्तामहेयदि वयमेव क्लेशभाजनानि भवेम ; न तु भगवतः कोपि अकारुणिकत्वादिशंकाकळंकावकाशोपीतिज्ञेयं.

सच भगवान् तत्तत्प्रमाणानुसारतस्तत्तजनैः निरन्तराभ्यस्तदृढतरध्यानयोगैरवगम्यते. नेतरैर्बाह्यैः प्रयत्नशतैरपि.

श्रूयतेहि—

†नचक्षुषागृह्यते नापिवाचा नान्यैर्देवैस्तपसा कर्मणा-वा । ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यति निष्कळं ध्यायमानइति.

## प्रमाणानिरूपणं.

तत्र प्रमाकरणं प्रमाणं. अत्रहि प्रत्यक्षमनुमानमागमश्चेति त्रिविधमेव प्रमाणं निरूप्यते.

---

*गीता अ. ९.
†मुंडके, ख. १.

(प्रत्यक्षनिरूपणं).

तत्र* प्रत्यक्षज्ञानजनकं प्रत्यक्षं. इदं नीलं इदं मधुरं इदं सुरभि इत्यादिज्ञानंप्रति चक्षुरादीनां चक्षुस्संयोगादि व्यापारद्वारा कारणत्वाच्चक्षुरादितत्तदिन्द्रियं प्रत्यक्षप्रमाणमित्युच्यते. तज्जन्यंतादृशज्ञानमपि प्रत्यक्षमित्युच्यते.

अनुमाननिरूपणं.

*[अनुमितिकरणमनुमानं अनुमितिश्च व्याप्तिज्ञानत्वेनव्याप्तिज्ञानजन्या. व्याप्तिज्ञानजन्यानुव्यवसायादेस्तत्वेन तज्जन्यत्वाभावान्नानुमितित्वं. अनुमितिकरणंच व्याप्तिज्ञानं. तत्संस्कारोवांतरव्यापारः. व्याप्तिश्च हेतुव्यापकसाध्यसामानाधिकरण्यरूपा. तद्ग्रहश्च धूमोवन्हिव्याप्यइत्याद्याकारकः.] सचग्रहः महानसमंदुराचत्वरादौ यत्रयत्रधूमस्तत्रतत्रवन्हिरिति तयोरसाहचर्यप्रत्यक्षवशात्संजायते. ततः पर्वतोयंवन्हिमान्वा नवेतिसंदिहानस्यपुरुषस्य वियत्पथविसरद्धूसरधूमरेखादर्शनेसति धूमोवन्हिव्याप्यइतिव्याप्तिसंस्कारउद्बुद्धोभवति. ततः पर्वतोवन्हिमानितिनिश्चयस्संजायते. सै

*वेदान्तपरिभाषाया मनुमानखण्डे.

वानुमितिरित्युच्यते. तथाच तादृशानुमितिहेतुर्व्याप्तिज्ञानमिति तदेवानुमानप्रमाणमित्युच्यते। तादृशमनुमानंतावत् यथाहिलोके गृहतटाकादिकं सकर्तृकं जन्यत्वात् एवं वियदादिकृत्स्नं जगदपि सकर्तृकमित्याद्यनुमितावुपयुज्यते. एवंच अस्मदादीनां निखिलजगत्कर्तृत्वासंभवेन सकर्त्रैव सकलजगदधीश्वरःपरमात्माभवितुमर्हति इत्यादिनिश्चयोपयुक्तं भवतीत्यादिज्ञेयं.

## आगमनिरूपणं.

आगमोनाम आगमयति प्रत्यक्षानुमानादिभिरगम्यमर्थं वेदयतीति भगवदाज्ञारूपोवेदः. सच वेदोमन्त्रब्राह्मणात्मकशब्दराशिरूपः.

सूत्र्यतेहि—

*मंत्रब्राह्मणयोर्वेदनामधेयं. इति.

स चतुर्विधः ऋग्वेदोयजुर्वेदस्सामवेदोऽथर्ववेदश्चेति. तत्र होतृक्रियाबाहुळ्यवान् ऋग्वेदः. अध्वर्युक्रियाबाहुळ्यवान् यजुर्वेदः. उद्गातृक्रियाबाहुळ्यवान् सामवेदः. प्रोच्यन्तेहि तत्तदृत्विजांक्रियाः—

†यदेनमृग्भिश्शंसन्ति, यजुर्भिर्यजन्ते, सामभिस्तुवन्तीति.

---

*आपस्तंबसूत्रे अ, १.

†निरुक्ते उत्तरषट्के, चत्वारिशृंगेतिमन्त्रव्याख्यानावसरे.

राज्ञां शान्तिकपौष्टिकाभिचारिकादिकृत्यबाहुल्यवा-नथर्ववेदः. तेषुत्रय्येव यज्ञसाधनत्वाद्विशेषेण धर्मसाधनं.

सूत्रितंच—

*यज्ञंव्याख्यास्यामस्सत्रिभिर्वेदैर्विधीयतइति.

अन्यस्तु अतथात्वात् क्वचित्तत्रतत्र वेदानां प्रस्तावेषु नगण्यते. तेषु वेदेषु केचिद्भागाः कर्मस्वरूपप्रतिपादकाः. केचिदुपासनास्वरूपप्रतिपादकाः. केचिद्ब्रह्मस्वरूपप्रतिपादकाश्चभवन्ति. तेचवेदाः केचिन्मंत्ररूपाः. केचिद्विधिरूपाः. केचिन्निषेधरूपाः. केचिदर्थवादरूपाः. जपहोमस्तुतिदानाराधनयज्ञादिकालेषु पठनोपयोगिनः कामोकार्षीन्मन्युरकार्षीदित्यादयः मन्त्ररूपाः. सत्कार्यप्रवर्तने नियामकाः सत्यंवद धर्मंचर अहरहस्संध्यामुपासीत यावज्जीवमग्निहोत्रंजुहोति यावज्जीवं दर्शपूर्णमासाभ्यांयजेत स्वाध्यायोऽध्येतव्यः इत्यादयोविधिरूपाः. दुष्कार्यनिवर्तनेनियामकाः नानृतंवदेत् नकळंजंभक्षयेत् नसुरांपिबेत् नपरदारान्गच्छेत् अनधीयानाव्रात्याभवन्ति इत्यादयोनिषेधरूपाः. स्ववाच्यार्थेतात्पर्यंविहाय विधिनिषेधयोः प्राशस्त्याप्राशस्त्यबो-

*शौनेसामान्यसूत्रे ख, १.

धकाः अर्थवादरूपाः. तथाच श्रद्धयादेयमित्यादिविधि-
परिपोषकाः दानेसर्वंप्रतिष्ठितं तस्माद्दानंपरमंवदंतीत्याद-
यो विध्यर्थवादाः नानृतंवदेदित्यादिनिषेधाप्राशस्त्यबोध-
काः समूलोवाएषपरिशुष्यतियोनृतमभिवदतीत्यादयो
निषेधार्थवादाश्चबोध्याः.

तेषांवेदानां आद्यप्रकाशनकर्ता भगवान् परमात्मैव.

*श्रूयतेहि—

अस्यमहतोभूतस्यनिश्वसितमेतत् यदृग्वेदोयजुर्वेदस्सा-
मवेदोथर्वेत्यादि. †ऋचस्सामानि जज्ञिरेछन्दांसि जज्ञिरे
तस्मात् यजुस्तस्मादजायतेत्यादिच.

तादृशवेदार्थप्रतिपत्तये शिक्षाव्याकरणछन्दोनिरुक्त-
ज्योतिषकल्पाश्चेति षट् वेदाङ्गानि शास्त्राणि तैस्तैर्मह-
र्षिभिः प्रणीतानि.

शिक्षानाम तत्तद्वर्णस्थानप्रयत्नादिनिर्णयानुकूलं शास्त्रं.
व्याकरणंनाम प्रकृतिप्रत्ययादिविवेचनपूर्वकसाधुशब्दप्र-
योगज्ञानानुकूलं शास्त्रं.

छन्दोनाम मात्रावर्णपादादिनियमनानां तत्तल्लक्षणा-

---

*बृहदारण्ये अ. ४.

† ऋग्वेदे अष्टक ८. अ ४. १८.

नांच प्रतिपादकं शास्त्रं.

निरुक्तंनाम वेदार्थतत्पर्यायपदादीनां प्रदर्शकंशास्त्रं.

ज्योतिषंनाम तत्तत्सत्कर्मानुष्ठानयोग्यतत्तत्कालस्वरूपनिरूपकं शास्त्रं.

कल्पोनाम श्रौतस्मार्तप्रयोगस्वरूपप्रतिपादकं शास्त्रं.

एतानि षडङ्गानि वैदिकशब्दार्थादिकमन्यांश्चविषयानसन्दिग्धं अवगमयन्ति. तथापि तत्रतत्र वाक्यार्थादिविरोधशंकायां मीमांसादिशास्त्राणि तत्तन्न्यायान्परिदर्श्य तत्तद्विरोधभ्रान्तिपरिहाराय जागरूकाणि भवन्ति.

तथाहि—एकएवरुद्रोनद्वितीयोवतस्थे इत्येकत्र सहस्राणि सहस्रशो येरुद्रा अधिभूम्यामित्यन्यत्रचेति एकोविरोधः, किंच अचक्षुश्श्रोत्रं तदपाणिपादमित्येकत्र सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् इत्यन्यत्रचेत्यन्योविरोधः; इत्यादौ प्राप्ते एकस्यापि रुद्रस्य नानामूर्तिस्वीकारशक्तिरस्तीतिद्योतनार्थं सहस्रत्वादिवर्णनमिति प्रथमविरोधपरिहारः. चक्षुराद्यवयवरहितस्यापिजगदीशितुरकर्मजमभौतिकमैच्छिकमौपाधिकंवा सहस्रशीर्षवत्वादिकं प्रतिपाद्यतइति द्वितीयविरोधपरिहारः. इत्यादीनि बहुधा विवेचितानि.

श्रुतिमूलकतया स्मृतीनां पुराणादीनांच प्रामाण्यं बोध्यं.

श्रुतिस्मृतिपुराणादीनां परस्परविरुद्धार्थशंकायां श्रुत्यनुसारेण स्मृतिपुराणादयोनेयाः.

स्मृतिनिरूपणं.

स्मृतिर्नाम स्मर्यते वेदार्थः अनयेति वेदोदिताचारव्यवहारप्रायश्चित्तादिकर्मस्वरूपप्रतिपादकं ब्रह्मस्वरूपप्रतिपादकंच शास्त्रं.

स्मृतयश्चाष्टादश मनुस्मृतिपराशरस्मृतिप्रभृतयः. ताश्चस्मृतयः श्रुतीनां दुरूहार्थप्रचिकासयिषुभिः परमकारुणिकैः मनुपराशरयाज्ञवल्क्यादिभिःप्रणीताः.

स्मर्यन्तेहि स्मृतिकर्तारः.—

*मनुर्बृहस्पतिर्दक्षोगौतमोथ यमोंगिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥
संवर्तोशनसौ शंखलिखितावत्रिरेवच ।
विष्ण्वापस्तंबहारीताः धर्मशास्त्रप्रवर्तकाः ॥
एतेह्यष्टादशप्रोक्ताः मुनयोनियतव्रताइति ।

एषु मानवंधर्मशास्त्रं अतीव मुख्यं भवति.

---

*वैद्यनाथीये परिच्छेदः १.

*श्रूयतेहि.—यद्वैकिंञ्च मनुरवदत्तद्भेषजमिति.

स्मर्यतेच—

†वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोस्स्मृतं ।

मन्वर्थविपरीतातु या स्मृतिस्सा न शस्यते ॥ इति.

एतदन्यैश्चमहर्षिभिः उपस्मृतयश्चाष्टादश प्रणीताः. तेचोपस्मृतिकर्तारः जाबालिः नाचिकेतः स्कंदः लौगाक्षिः कश्यपः व्यासः सनत्कुमारः शन्तनुः जनकः व्याघ्रः कात्यायनः जातूकर्णिः कपिंजलः कणादः बौधायनः विश्वामित्रः पैठीनसिः गोबिलश्चेत्यष्टादश ज्ञातव्याः.

सर्वासामासां स्मृतीनां मध्ये कलौ पाराशरीस्मृतिर्मुख्याभवति.

स्मर्यतेहि—

‡कृतेतु मानवाधर्मास्त्रेतायां गौतमास्स्मृताः ।

द्वापरे शांखलिखिताः कलौ पाराशराः स्मृताइति॥

## पुराणनिरूपणं.

पुराणंनाम सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च वंशानुचरितं चेति प्रकरणपंचकं यत् तत्प्रतिपादकः ग्रन्थ-

*यजुर्वेदे कांड २. पन्न १. अनु ११.

†बार्हस्पतस्मृतिः कुल्लूकभट्टीये अ, १. उदाहृता.

‡पराशरस्मृतौ अ. १.

र्थनिर्णायको ग्रन्थविशेषः.

तच्चपुराणमष्टादशाविधं. *ब्राह्मं १०, पाद्मं ५५, वैष्णवं ८, वायवीयं २४, भागवतं १८, नारदीयं २५, मार्कंडेयं ३२, आग्नेयं ८, भविष्यत् ३१, ब्रह्मकैवर्तं १२, लैंगं ११, वाराहं २४, स्कान्दं १००. वामनं २४, कौर्मं ६, मात्स्यं १४, गारुडं १६, ब्रह्माण्डं १२ चेति.

अत्रायं पुराणानां नामसंग्रहश्लोकः—

†मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयं ।
अनापलिंगकूस्कानि पुराणानि पृथक्पृथक् ॥

चतुर्मुखमुखचतुष्टयाद्विसृष्टानां वेदानां विभजनात्पूर्वमेव प्रणीतत्वात् एषां पुराणसंज्ञा. तत्प्रणेता तु व्यासः. व्यासोनाम व्यस्यति वेदान्विभजते इति वेदविभागकर्ता महर्षिः. वेदव्यासइतिच व्यवह्रियते. तादृशाः व्यासाश्चाष्टाविंशतिः ब्रह्ममनुशुक्रबृहस्पतिसूर्ययमेन्द्रवसिष्ठ सारस्वत त्रिधामत्रिशिखभरद्वाजान्तरिक्षवर्णित्र्यारुणिधनंजयक्रतुंजयजयगौतमोत्तरवाजश्रवस्सोमशुष्कायणतृणाबिंद्वर्क्षवाल्मीकिशक्तिपराशरपाराशर्याइति.

---

*ब्राह्मं १० दशसहस्रग्रन्थमित्यादिसंख्याविष्णुपुराणरीत्याबोध्या.

†देवीभागवते स्कं, १. अ, २.

अत्रेदंबोध्यं—

*कल्पादौ चतुर्मुखस्सकलवेदप्रकाशनात्पूर्वं तदर्थान् संगृह्य सुखबोधाय शतकोटिग्रन्थसंख्याकं कंचित्प्रबन्धं आततान. स एव ब्राह्मपुराणसंज्ञामयासीत्.

ततः कस्मिंश्चियुगान्तरे तच्च पुराणं ब्राह्मादिभेदेन अष्टादशधा विभज्य वेदानपि चतुर्धा विबभाज ततस्तत्तद्युगेषु मन्वादयोव्यासाः तत्तद्बोद्धृबुद्धिशक्त्यनुसारेण ताएव वेदानुपूर्वीः तानेव पुराणार्थांश्च संक्षिप्यसंक्षिप्य कांडवर्गाध्यायादिविभागपूर्वकं पर्यकल्पयन्. अतीतद्वापरान्ते भगवान् पाराशरिः कृष्णद्वैपायनस्तु अनन्तशाखासमुदायरूपेणास्थितं वेदं चतुर्धा विभज्य क्रमात्पैलवैशंपायनजैमिनिसुमन्तून् शिष्यान् बोधयामास.

ततस्ताश्छिष्यैस्तश्छिष्यैस्तश्छिष्यप्रशिष्यादिक्रमेणच उपदिष्टोयं वेदतरुः काठककौथुमतैत्तरीयाद्यनेकशाखावान् समुल्ललास.

वेदविभागानन्तरं सभगवान्सात्वतेयः सुविस्तरं पुराणमालोच्य चतुर्लक्षग्रन्थसंख्यात्मना संक्षिप्य शिष्येभ्यस्समानसोल्लासं बुबोधयिषुः श्रुत्युक्तधर्मपर्यवसायिनः देवर्षिराजर्षिचरित्ररूपान् कांश्चिद्दृष्टांशान् कांश्चित् श्रुतां-

---

*श्रीधरीय विष्णुचित्तीयतृतीयांशषष्ठाध्यायात् चरणव्यूहादिभ्यश्च संगृहीतं.

शांश्च प्रकाश्य इदानीमुपलभ्यमानपाद्माद्यष्टादशपुराणा-न्यारचय्य तानि सूतनामकं स्वशिष्यं ग्राहयामास.

किञ्च—स महर्षिरनेकोपाख्यानतरंगतरंगितं सकल-लोकशास्त्रसंप्रदायविज्ञानलक्ष्मीजन्मगेहं महार्णवमिवा-मृतप्रदं च भारतंनाम पंचमंवेद मवतारयामास.

ततस्समुनिरेव संसारपंकनिर्मग्नानुद्दिधीर्षुःब्रह्मसूत्रा-णि निर्माय बोधयामास. तेषां ब्रह्मसूत्राणां श्रीम-च्छंकरभगवत्पादाचार्यैः श्रीमद्रामानुजभगवत्पादाचार्यैः श्रीमदानन्दतीर्थभगवत्पादाचार्यैः श्रीमन्नीलकंठाचार्या-दिभिश्च भाषितानि भाष्याणि भगवतः केलीसौधशि-खरसोपानानीव विराजन्ते-इत्यादि.

तथाच सएषव्यासः पाराशरिरेव अष्टादशपुराणानां कर्ता सत्यवतीसुतः इतिश्लाघ्यते.

एतेषु पुराणेषु स्कान्दशैवलैङ्गकौर्मवामनवाराह-भविष्यन्मात्स्यमार्कण्डेयब्रह्मांडानीति दश शिवमाहा-त्म्यप्रतिपादकानि. नारदीयभागवतगारुडवैष्णवानीति चत्वारि विष्णुमाहात्म्यप्रतिपादकानि. ब्राह्मपाद्मेद्वे ब्रह्म-माहात्म्यप्रतिपादके. ब्रह्मकैवर्तमेकं सूर्यमाहात्म्यप्रति-पादकं. आग्नेयमेकमग्नि माहात्म्यप्रतिपादकमिति ज्ञेयं.

अन्यैश्च महर्षिभिरूपपुराणानि कानिचित् प्रणीतानि. तानिच सनत्कुमारीयं नारसिंहं नन्दीयं शिवधर्मः दौर्वासं नारदीयं कापिलं मानवं औशनसं ब्रह्मांडं वारुणं काळीयं वासिष्टं लैङ्गं माहेश्वरं साम्बं सौरं पाराशरं मारीचं भार्गवं चेत्यादीनि ज्ञातव्यानि.

तथाचभारतादीनामितिहासानां ब्राह्मादीनांपुराणानांच वेदार्थनिर्णायकत्वेन प्रामाण्यं बोध्यं.

पठ्यतेहि—

*इतिहासपुराणाभ्यां वेदंसमुपबृंहयेत् ॥

वेदाः प्रमाणंप्रथमं स्वतएव ततःपरं ।

स्मृतयश्चपुराणानि भारतंमुनिपुंगवाः ॥ इत्यादि.

एवं शैवपाशुपतपांचरात्राद्यागमानां शिल्पायुर्वेद गांधर्वादीनां सर्वेषामपि वेदार्थोपबृंहणतया वेदाविरुद्धांशएव प्रामाण्यं बोध्यं.

भगवदवतारनिरूपणं.

एभिःप्रत्यक्षानुमानादिभिः प्रमाणैः श्रवणमननादिकमनुतिष्ठता पुरुषेण सक्षात्कारविषयीकरणीयः परमकारुणिकः सभगवांस्तदातदा स्वाज्ञोल्लंघनेन दुष्कृत्यकारि-

---

*स्कान्दे सूतसंहितायां अ, १.

णामसतां शिक्षणाय सतां रक्षणायच स्वांशैः देवतिर्यङ्मनुष्यादिरूपैः पावनान्यसाध्यान्याश्चर्याणि च कार्याणि कुर्वन् स्वक्रियादृष्टांतेन जनान् सद्धर्मे प्रवर्तयन् लोकव्यवस्थां करोति.

गीयतेहि—

*यदायदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ॥
परित्राणाय साधूनां विनाशाय च दुष्कृतां ।
धर्मसंस्थापनार्थाय संभवामियुगेयुगे ॥ इति.

तथाहि- पुरा खलु स परमात्मा वासुदेवः सकललोककंटकं अपहृतवेदं सोमकनामकमसुरं उन्मूलयितुं आलंब्य मात्स्यं रूपं तरसा रसातलमवगाह्य महोदधिजलमध्यमध्यासीनं तमपराधिनमपहत्य समानयन् वेदान् सनिर्वेदं महीतलं अनिर्वेदं आरचयन् प्रवर्तयामास सकलान् धर्मान्.

अथापरस्मिन् काले स कैटभारिः कौर्मं रूपमालंब्य मंदरमुद्वहन् सुधापानोद्यतान् अनुजग्राह देवगणान्.

अथकस्मिंश्चिच्चतुर्मुखदिवसावसाने सहरिर्वाराहं देहमवलंब्य महाजलमध्यविलीनं अवनीतलमुन्नमयन् अंकूरयामास सकलं जगत्.

---

*गीता अ, ४.

अन्यस्मिन्ननेहसि हिरण्यरक्षसा विक्षोभिते क्षोणीतले प्रकंपितेषु साधुषु विक्रान्तेषु क्रूरेषु विध्वस्तेषु धर्ममार्गेषु प्रभीतप्रह्लादसमाह्लादनाय भगवान् भयंकरं सैम्हं वेषमाश्रित्य स्तम्भात्संभवन् निहत्य तं राक्षसं आनन्दयन्नखिलभक्तवृन्दं प्रकाशयामास निजं वात्सल्यं.

एकदा तु भगवान् अखिलासुरबलोद्रेकमसहमानैः दीनैर्देवैस्संप्रार्थितः स्वयमदितेर्वामनीभूयावतरन् यजमानं बलिं असुरेशं अंघ्रित्रयपरिमितां वसुधां भिक्षित्वा त्रिविक्रमीभूय प्रवृद्धः पादेनैकेन द्यां अन्येन गामपरेण च तमाक्रम्य तदायतनं पाताळमुपनयन् तत्प्रार्थितस्तद्दौवारिकइव तत्सान्निहितस्तमनुगृह्णन् व्यक्तीचकार स्वीयांभक्तपराधीनतां.

ततःकदाचित्सभगवान् जामदग्न्यीभूय कठोरकुठार पाणिः उन्मत्तदुर्वृत्तक्षत्रवर्गसर्गप्रळयपावकीभवन् परिभ्रष्टान् धर्मान् स्थापयामास.

अनंतरमस्मिन्नेव युगे रावणे रक्षसि निष्पीडयति साधून् निष्प्रचारयति धर्मान् निष्पादयति भुवनबाधां भगवान् दाशरथिर्भूत्वा काननगमनात् पितृनियोगगौरवं प्रकटयन् सीतैकायत्ततया एकपत्नीव्रतक्रममुपदिशन् निलीयवालिवधात् मित्रकार्यैकमुख्यतामवबोधयन् सुग्रीव

संग्रहाद्दीनबंधुतां प्रकाशयन् विभीषणसंग्रहणात् शरणागतभरणोपममवबोधयन् रावणकुंभकर्णादिरक्षोगणविक्षोभणात् दुष्कृत्यकारिणामिदमेव फलमिति घोषयन् सीताग्रहणेन संकल्पितकार्यफलमेवं समीक्ष्य संग्रहणीयमित्यादिधर्मान् लोकानबूबुधत्.

अत्रैते श्लोकाः भवन्ति.

*बहुदारग्रहणार्होऽप्येकां पत्नीं समुद्वहन्धीरः ।
अनवरतमेकपत्नीव्रतकलनाक्रममुपादिशद्रामः ॥

काननगमनात्पित्रोराज्ञानुसृतिर्बभूव यदुपज्ञं ।
आचूडमानखाग्रं सत्यैकमयं स्मरामि रघुवीरं ॥

मित्रव्यसनासहन स्समुद्धतंवालिनं प्रहरन् ।
सुग्रिवमग्रहीय स्सहिदेवो दीनबंधुरवतान्नः ॥

द्विषदनुजमपिच दनुजं सहजसमानं ररक्ष योदेवः ।
शरणागतभरणगुणप्रथमोदाहरणमेनमवलंबे ॥

दुष्कृत्यकारिणां भुवि विषमं फलमेवमेवभवतीति ।
रक्षोगणविक्षोभणकर्तारं कमपि देवमाकलये ॥

सीतामनलानीतां स्वीकुर्वन्नुपदिदेश लोकानां ।
संकल्पितकार्यफलं संग्रहणीयं समीक्ष्य चैवमिति ॥

---

*स्वंसप्तश्लोक्यस्माद्विरचिता.

कस्याप्यनार्यवाक्यात्स्वार्धं पत्नीं त्यजन्नबोधयत ।
लोकापवादभीरोस्त्याज्या तु तनुर्नमानितेत्येषः ॥
इति.

तदनुतदन्यस्मिन् द्वापरं युगे स्वांशीभूतशेषांशेन स्वांशेन च बलभद्ररूपतामेत्य प्रलंबादिदुष्टान्निहत्य तीर्थयात्राद्यपदेशेन सत्कर्मावश्यकत्वादिकमुपदिदेश सकलजनानां.

अथ तस्मिन्नेव काले स भगवान् श्रीकृष्णरूपेण निखिलभक्तानां *धर्मार्थकाममोक्षाख्यं फलं प्रयच्छन् भूभारावतरणापदेशेन अस्मदादीनामपि समाश्रयणीयत्वाय अवतीर्य्योर्व्यां सकलमनुजनयनविषयतां गतः परावरनिखिलजनमनोहारिदिव्यचेष्टितानि कुर्वन् पूतनाशकटयमळार्जुनारिष्टप्रलंबधेनुककाळियकेशिकुवलयापीड—चाणूरमुष्टिककौसलकंसादीन् निहत्य अनवधिकदयासौहार्दानुरागगर्भावलोकनालापामृतैः विश्वमाप्याययन् निरतिशयसौन्दर्यसौशील्यादिगुणगणाविष्कारेण अक्रूरमालाकारादीन् परमभागवतान् कृत्वा पांडुतनययुद्धप्रोत्साहनव्याजेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास.

---

*रामानुजीयगीताभाष्यपीठिकायां.

ततः कलियुगे तदन्तेच कलिमलप्रध्वंसनाय प्रबुद्ध-बुद्धरूपः कुहनातुरङ्गमुखतरंगितात्मा च परमात्मा स्वयमविज्ञातवेदशास्त्रादितत्वानपि अविचारित धर्म—सौक्ष्म्यानपि पंडितंमन्यान् वेदमार्गविनिन्दकान् अनूयकान्क्रूरान्कुटिलान्कृतघ्नांश्च निहत्य यथापुरं व्यवस्थापयेदेव देवोधर्ममार्गान्.

अत्रायंसंग्रहश्लोकः—

*मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः ।
रामो रामौच कृष्णश्च बुद्धः कल्किश्च पातुनः ॥

अत्रायं विशेषः बलभद्रावतारः श्रीकृष्णावतारेण सहैकीभवतीति बोध्यं. किंच एषामवताराणां लोकानुग्रहार्थं भगवता स्वीकृतमूर्तरूपत्वात् अपारिमितानन्तमहामहिमशालित्वात् श्रुतिस्मृत्यादेप्रतिपादितोपास्यरूपत्वाच्च न प्राकृतप्राणिसादृश्यं भवितुमर्हति.

किन्तु—यथाहि वन्हिस्सत्वान् दहन्नपि न पातकीति परित्यज्यते गृहादिकं दहन्नपि न शत्रुरिति द्विष्यते पाकादिक्रियाभिरुपकर्तापि न मित्रमिति परिष्वज्यते तमोनिवारकोपि न गुरुरिति पदयोस्स्पृश्यते अशुचिस्पृष्टोपि नाशुचिरिति दूरीक्रियते

---

*प्राचीनैःप्रणीतः.

किन्तु यत्रकार्यं यददृष्टाधीनं तत् तदुपभोगं साक्षात्परंपरया वा जनयत्येव—इत्यंगीक्रियते तथा भगवानपि तत्तज्जनीयादृष्टवशात् तत्तत्कार्यकारी भवतीति न तस्य सत्कार्यासत्कार्यप्रयुक्त पुण्यपापगन्धसंबन्धोऽस्तीति ज्ञेयं.

गीयतेहि—

*प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः ।
भूतग्राममिमं कृत्स्नं अवशं प्रकृतेर्वशात् ॥
न च मां तानि कर्माणि निबध्नंति धनंजय ।
†न मां कर्माणि लिंपन्ति न च कर्मफले स्पृहा ।
*अवजानन्ति मां मूढा मानुषीं तनुमाश्रितं ।
परं भावमजानन्तो ममभूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यभावेन ज्ञात्वा भूतादिमव्ययं ॥ इति.

एवंच निर्गुणमशरीरं ब्रह्म गगनवद्ध्यातुमशक्यमिति उपासनासौलभ्यार्थं इंद्रादिदेवतारूपेण वा राम-

---

*गीता अ. ९. †गीता अ. ४.

कृष्णाद्यवताररूपेणवा शिलादारुलोहादिमयविग्रहादिरूपेण वा भगवान् विश्वमूर्तिः परमात्मा तावत् तत्तदुपासकधारणाशक्त्यनुसारेण उपासनीयोभवति. न तु तत्तदुपाधिमात्रमितिज्ञेयं.

श्रूयतेहि—

*चिन्मयस्याद्वितीयस्य निष्कळस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणोरूपकल्पना॥ इति.

गीयतेच—

†योयो यांयां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं॥ इति.

प्रोच्यतेच—

‡अग्नौ क्रियावतां देवो रवौ देवो मनीषिणां ।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः॥ इति.

पठ्यतेच—

§यच्च मूर्तं हरेरूपं यादृक्चिन्त्यं नराधिप ।
तच्छ्रूयतामपाधारा धारणानोपपद्यते ॥
प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणं ।
सुकपोलं सुविस्तीर्णललाटफलकोज्वलं ॥

---

*रामतापनीये प्रथमोपनिषदि. †गीत अ, ७.

‡आग्नेयपुराणे §विष्णुपुराणे अं, ६. अ, ७.

समकर्णान्तविन्यस्तचारुकुंडलभूषणं ।
प्रलंबाष्टभुजं विष्णुमथवापि चतुर्भुजं ॥
शार्ङ्गशंखगदाखड्गचक्राक्षवलयान्वितं ।
वरदाभयहस्तं च मुद्रिकारत्नभूषितं ॥
चिन्तयेत्तन्मयोयोगी समाधायात्ममानसं ।
तावद्यावद्दृढीभूता तत्रैव नृप धारणा ॥
व्रजतस्तिष्ठतोयद्वा स्वेच्छया कर्म कुर्वतः ।
नापयाति यदा चित्तात् सिद्धां मन्येत तां तदा ॥
ततश्शंखगदाचक्र शार्ङ्गादिरहितं बुधः ।
चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकं ॥
सा यदा धारणा तद्वदवस्थानवती ततः ।
किरिटकेयूरमुखैर्भूषणैरहितं स्मरेत् ॥ इत्यादि.

तथाच यथाहि लोके पंडितीभविष्यतोबालकस्य प्रथमतः तत्तद्रेखास्वक्षरज्ञानं ततोद्वितीयतृतीयादिपुस्तक-पठनं तदनु व्याकरणादितत्तच्छास्त्रपरिशीलनमिति तत्तत्क क्ष्यानुसारेण सादरं विद्योपासनीया भवति ततस्तदातदा पुनःपुनश्श्रवणचर्चनाचिन्तनादिवशात् तत्तच्छास्त्रगत-विषयज्ञाने सति तत्तदज्ञानावस्थया निर्मुच्यमानः सप-ण्डितइत्याभिधीयते तथैव कृतार्थीभविष्यतोजनस्यापि

प्रथमतः पार्थिवरूपेष्वात्मनोध्यानं अथो विधिहरिहरे- न्द्रसूर्यगणपत्यादिदिव्यमूर्तिष्वनुसन्धानं तदन्वन्नमयादि तत्तत्कोशपरिशीलनं इत्यादितत्तदुपासनानुसारेण सभ- क्तिप्रकर्ष परमात्मा उपासनीयोभवति ततस्तदातदा पुनः पुनश्श्रवणमनननिदिध्यासनादिवशात् तत्तत्कोशगतवि- षयस्वरूपज्ञाने सति तत्तदज्ञानावस्थया निर्मुच्यमानः स- कृतार्थइत्यभिधीयते. इत्यादिज्ञेयं.

तदेतत्सर्वयोगप्रकरणे समाधिस्वरूपनिरूपणावसरे- व्यक्तीभविष्यति.

एवमादिभिरन्यैश्च तत्तदनुरूपविभूतिभिरनन्तैः ली- लावतारैर्भगवान् परमकारुणिकः सकलभक्तजननयन- गोचरतां प्रतिपद्य तैस्तैस्सल्लापितस्संपूजितस्संचिन्तित- स्सुलभमार्गेण तेषामुत्तमंफलमुपनयन् भूभारमपनयन् सफलतामेवापादयति सकलान् धर्मान्.

इतिभगवत्स्वरूपनिरूपणं.



# प्रवृत्तिधर्मप्रकरणं.

सचधर्मोद्विविधः प्रवृत्तिधर्मोनिवृत्तिधर्मश्चेति. एतावेवाभ्युदयधर्मनिश्श्रेयसधर्माविति कर्मयोगज्ञानयोगाविति चोच्यैते. तत्र तत्तदभ्युदयोद्देश्यकप्रवृत्तेर्जायमानोधर्मः प्रवृत्तिधर्मः. प्रवृत्तिधर्मोद्विविधः साधारणधर्मोविशेषधर्मश्चेति.

## साधारणधर्मनिरूपणं.

तत्र स्त्रीपुंसात्मकसकलमानवसाधारण्येन विधीयमानोधर्मस्साधारणधर्मः. तएतेसाधारणधर्माः शास्त्रतस्संगृह्य सनिषेधाःप्रदर्श्यन्ते. तथाहि—

१ सत्यंवद. *
२ धर्मंचर. *
३ कल्याणंकर्म कुर्यात्.
४ प्रागुदयात्प्रबुध्येत.
५ भगवंतमभिद्ध्यायेत्.
६ तद्गुणान् स्मरेत्.
७ तन्नाम कीर्तयेत्.
८ प्रातःप्रातस्स्नायात्. *
९ धौतेवस्त्रे परिदध्यात्. *
१० नकच्चरं धारयेत्. *
११ मातरंपितरावभिवन्देत.
१२ तदभिमतेपथि वर्तेत.
१३ नतयोराज्ञामतिवर्तेत.
१४ विद्यागुरुषुविनयेत.

---

* एतच्चिन्हानि विधिवाक्यानि श्रुतिस्मृत्यादिभ्यस्संगृहीतानि. तदन्यानि कानिचिदस्मत्संकलितानिच.

१५ सर्वानपिस्त्रीपुंसान् सोदरीसोदरवत्संभावयेत्.

१६ राजनि कृतज्ञतामधिगच्छेत्.

१७ नपरोत्कर्षायासूयेत.*

१८ नक्षुद्रैर्मैत्रींकुर्यात्.

१९ साधुषु स्निह्येत्.

२० पापिषूदासीत.

२१ सुखिषु मोदेत.

२२ दीनेषु दयेत.

२३ आत्मवत्सर्वभूतानि जानीयात्.*

२४ नकिंचित्परस्वं हरेत्.

२५ नकस्मैचिद्द्रुह्येत्.

२६ नकस्मैचित्क्रुध्येत्.

२७ नलोकमर्यादामतिवर्तेत

२८ नकंचनजनमवमन्येत.

२९ मृदुमधुरं भाषेत.

३० मितंब्रूयाद्धितंब्रूयात्.*

३१ नानृतं वदेत्.*

३२ प्रियंच नानृतंब्रूयात्.*

३३ नाश्लीलं कीर्तयेत्.*

३४ नान्यदोषानुदीरयेत्.*

३५ नकलहंजनयेत्.

३६ नकेनापि विवदेत.*

३७ नैवात्मानं विकत्थयेत्.*

३८ नदत्तं पुनरादद्यात्.*

३९ नवृथाशां जनयेत्.

४० नाशुचिर्भुंजीत.*

४१ नपङ्क्तिभेदं जनयेत्.

४२ नपर्युषितं भुंजीतान्यत्रफलमूलादिभ्यः.*

४३ नदिवा स्वपेत्.*

४४ नद्यूतंचरेत्.*

४५ नवृथाकालमतिवाहयेत्

४६ सद्विद्यासंगैर्दिनंनयेत्.

४७ सर्वदासर्वतोप्यप्रमत्ततामनुवर्तेत.

४८ मनसावाचाकर्मणाच विनिर्मलतरमवतिष्ठेत.

इत्यादिज्ञेयं.

स्मर्यतेच—

*अहिंसयैव भूतानां कार्यंश्रेयोनुशासनं ।
वाक्चैव मधुराश्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥

नारुन्तुदस्स्यादार्तोपि नपरद्रोहकर्मधीः ।
ययानोद्विजतेवाचा नालोक्यांतामुदीरयेत् ॥

यस्यवाङ्मनसी शुद्धे सम्यग्गुप्तेच सर्वदा ।
सवैसर्वमवाप्नोति वेदान्तोपगतंफलं ॥

†किंचित्परस्वंनहरेन्नाल्पमप्यप्रियंवदेत् ।
प्रियंचनानृतंब्रूयान्नान्यदोषानुदीरयेत् ॥

पापेप्यपापःपुरुषेह्यभिधत्ते प्रियाणि यः ।
मैत्रीकृदन्तःकरणस्तस्यमुक्तिः करेस्थिता ॥

ये कामक्रोधलोभानां वीतरागा नगोचरे ।
सदाचारस्थितास्तेषामनुभावैर्धृता मही ॥

यईर्षुःपरवित्तेषु रूपेवीर्येकुलेऽन्वये ।
सुखसौभाग्यसत्कारे तस्यव्याधिरनन्तकः ॥

एवं—

‡हिंसास्तेयान्यथाकामपैशुन्यपरुषाऽनृतं ।
सम्भिन्नलापं व्यापदमभिध्यां दृग्विपर्ययं ॥

---

*मनुस्मृतौ अ, २. †विष्णुपुराणे अं. ३, अ. १९.

‡वाहटे अ. २. उदाहृतं.

पापंकर्मेतिदशधा कायवाङ्मानसैस्त्यजेत् ।
अवृत्तिव्याधिशोकार्ता ननुमन्येतशक्तितः ॥
*यदानकुरुतेपापंसर्वभूतेषुकर्हिचित् ।
कर्मणामनसावाचा ब्रह्मसम्पद्यतेतदा ॥
इत्यादिज्ञेयं.

(पुंधर्माः).

†पोष्यवर्गार्थसिद्ध्यर्थं न्यायवर्तीतुबुद्धिमान् ।
न्यायोपार्जितवित्तेन कर्तव्यंह्यात्मरक्षणं ॥
‡वृद्धौचपितरौपुत्रीस्सोदरीश्च प्रजावतीः ।
अशक्तौभ्रातरौचापि प्रीणयेत्कुलवर्धनः ॥
उपाध्यायं पितरंमातरं वा येद्रुह्यन्तिमनसाकर्मणावा ।
तेषांपापं भ्रूणहत्याविशिष्टं नान्यस्तेभ्यःपापकृद-
स्तिलोके ॥
परदारान्नगच्छेत्तु मनसापिकथंचन ।
परदारादरःपुंसामुभयत्रापि भीतिदः ॥
§विद्यागमार्थंपुत्रस्यवृत्त्यर्थंच यतेत यः ।
पुत्रंसदा साधुशास्ति प्रीतिकृत्सापिताऽनृणी ॥

---

*भारते अरण्यपर्वणि अ. २४९. †पराशरस्मृतौ अ. १२.
‡वैद्यनाथीये कांडः १. व्यासमनुदक्षयमादीनां वचनानुवादः.
§शुक्रवचनं.

*पितृवत्पालयेत्पुत्रान् ज्येष्ठोभ्राता यवीयसः ।
पुत्रवच्चापि वर्तेरन् ज्येष्ठभ्रातरि धर्मतः ॥

प्रजनार्थं महाभागाःपूजार्हागृहदीप्तयः ।
स्त्रियश्श्रियश्चगेहेषु नविशेषोस्ति कश्चन ॥

अर्थस्यसंग्रहेचैनां व्ययेचैव नियोजयेत् ।
शौचेधर्मेऽन्नपङ्क्तौच †पारिणह्यस्य चेक्षणे ॥

विधायवृत्तिंभार्यायाः प्रवसेत्कार्यवान्नरः ।
अवृत्तिकर्शिताहिस्त्री प्रदुष्येत्स्थितिमत्यपि ॥

यारोगिणी स्यात्तु हिता संपन्नाचैवशीलतः ।
साऽनुज्ञाप्याधिवेत्तव्या नावमान्याच कर्हिचित्॥

येत्यजन्ति स्विकांभार्यां मूढाः पंडितमानिनः ।
तेयान्तिनरकंघोरं तामिस्रं नात्रसंशयः ॥

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्याभूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥

यत्रनार्यस्तु पूज्यन्ते रमन्तेतत्रदेवताः ।
यत्रैतास्तु नपूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥

इत्यादिज्ञेयं.

---

*वैद्यनाथीये कां १. मन्वादीनां वचनानुवादः.

†पारिणह्यं गृहोपस्करः

(स्त्रीधर्माः).

*साभार्या यापतिप्राणा साभार्या याप्रजावती ।
मनोवाक्कर्मभिश्शुद्धा पत्यादेशानुवर्तिनी ॥
च्छायेवानुगता स्वच्छा सखीव हितकर्मसु ।
सदाप्रहृष्टया भाव्यं गृहकार्येषु दक्षया ॥
नकेनचिद्विवदेच्च अप्रलापविलापिनी ।
नचातिव्ययशीलास्यान्नधर्मार्थविरोधिनी ॥
पतिप्रियहिते युक्ता स्वाचारा संयतेन्द्रिया ।
इहकीर्तिमवाप्नोति प्रेत्यचानुपमंसुखं ॥
भर्तारं श्वशुरं श्वश्रूं भावुकं देवरादिकान् ।
आर्यान्समर्चयेद्यातु सैवप्रोक्ता पतिव्रता ॥
†कुरूपोवा कुवृत्तोवा दुस्स्वभावोथवा पतिः ।
रौद्रोवाथ दरिद्रोवा कदर्यः कुत्सितोपिवा ।
सततं देववत्पूज्यस्साध्व्या वाक्कायकर्मभिः ।
संयता गुप्तधान्याच सुसंमृष्टनिवेशना ।
गुरूणां पुत्रमित्राणां बन्धूनां कर्मकारिणां ॥
आहूतानांच भृत्यानां दासीदासजनस्यच ।

---

*मनु अ. ६. †वैद्यनाथीये कां १. व्यासमनुदक्षादीनां वचनानुवादः.

अतिथ्यभ्यागतानांच भिक्षुकाणांच लिंगिनां ॥
आसने भोजने दाने सम्माने प्रियभाषणे ।
तत्तद्गुणानुसारेण प्राप्तकाले यथोचितं ॥
दक्षया सर्वदाभाव्यं भार्यया गृहमुख्यया ।
गृहव्ययाय यत्तुद्रव्यं दिशेत्पत्न्याःकरे पतिः ।
निर्वर्त्यगृहकार्यं सा किंचिद्बुध्या-वशेषयेत् ॥
दानार्थमर्पितेद्रव्ये लोभात्किंचिन्नधारयेत् ।
भर्तुराज्ञांविना नैवस्वबन्धुभ्योदिशेद्धनं ॥
सकामंवीक्षिताप्यन्यैः प्रियैर्वाक्यैःप्रलोभिता ।
स्पृष्टावा जनसम्मर्दे नविकारमुपैतिया ॥
पुरुषंसेवतेनान्यं मनोवाक्कायकर्मभिः ।
लोभितापि परेणार्थैः स्सासती लोकभूषणा ॥
नव्रतेनोपवासेन धर्मेणविधिनानच ।
नारीस्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥
स्त्रीणामार्यस्वभावानां परमंदैवतं पतिः ।
पतिशुश्रूषणाच्चार्यास्तपोनान्यद्विधीयते ॥
कामाक्रोधान्मत्सराद्वा भर्तारं याऽवमन्यते ।
सा सप्तजन्मकंयावद्भार्याकोस्यान्नसंशयः ॥

*मृतेभर्तरि साध्वीस्त्री ब्रह्मचर्यव्रते स्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथातेब्रह्मचारिणः ॥

अन्यच्चस्मर्यते—

†अनुज्ञागृहान्निर्गच्छेन्नानुत्तरीया. नत्वरितंव्रजेत्. नपरपुरुषमभिभाषेतान्यत्रवणिक्प्रव्रजितवृद्धवैद्येभ्यः. आगुल्फंवासःपरिदध्यात्. नहसेदपावृतं. भर्तारंतद्बन्धूंश्च नदूषयेत्. नगणिकाधूर्ताभिसारिणीदुश्शीलादिभिस्सहैकत्र तिष्ठेत्. संसर्गेणहि चारित्रं दुष्यति. इत्यादि.

एवंच—

‡तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ ।
यथा नातिचरेतान्तौ वियुक्ताावितरेतरं ॥
अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः ।
एष धर्मस्समासेन ज्ञेयस्स्त्रीपुंसयोः परः ॥

तथाच—

यश्च जनः प्रतिपादितसत्यवचनादिसद्धर्मैकप्रवृत्तो भवति सस्वयं तीर्णः परान् तारयतीतिन्यायेन स्वस्य परेषां च आनुकूल्यमेव संपादयति. यस्त्वनृतवचनपर-

---

*मनु अ, ५.

†विज्ञानेश्वरीये अ, विवाहप्रकरणे शंखसूत्रानुवादः.

‡मनु अ, ९.

स्वापहरणाय्यधर्मप्रवृत्तोभवति स स्वयंनष्टःपरान्नाशयतीतिन्यायेन स्वस्य परेषां च प्रातिकूल्यमेव संपादयति. इत्यादिज्ञेयं.

## विशेषधर्मनिरूपणं.

वर्णाश्रमादिमत्तत्जनविशेषानुद्दिश्य विधीयमानोधर्मो विशेषधर्मः. सपंचविधः वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मश्चेति. तत्रवर्णयोग्योधर्मो वर्णधर्मः. वर्णोनाम ब्राह्मणाद्यन्यतमः. वर्णश्चतुर्विधः ब्राह्मणः क्षत्रियो वैश्यश्शूद्रश्चेति.

श्रूयतेहि—

*प्रजापतिर्यज्ञमसृजत. यज्ञंसृष्टमनु ब्रह्मक्षत्रेअसृज्येतामित्यादि.

एवमन्यत्रापि श्रूयतेहि चातुर्वर्ण्यसंम्भवादिक्रमः—

†प्रजापतिरकामयत प्रजायेयेति. समुखतस्त्रिवृतं निरमिमीत. तमग्निर्देवतान्वसृज्यत. गायत्रीच्छन्दोरथन्तरगंसाम ब्राह्मणोमनुष्याणामजःपशूनां. तस्मात्तेमुख्यामुखतोह्यसृज्यन्त. उरसाबाहुभ्यां पंचदशं निरमिमीत. तमिन्द्रोदेवता॰न्वसृज्यत. त्रिष्टुप्छन्दोबृहत्

*ऋगैतरेयब्राह्मणे पंचिका ७. अ ४.

†यजुर्वेदे. कांडः. ७. प्रश्नं. १. अनुवाकः. १.

साम राजन्योमनुष्याणामविःपशूनां. तस्मात्ते वीर्यावन्तो वीर्याध्यसृज्यन्त. मध्यतस्सप्तदशं निरमिमीत. तंविश्वेदेवादेवताअन्वसृज्यन्त. जगतीच्छन्दो वैरूपगंसाम वैश्योमनुष्याणां गावःपशूनां. तस्मात्तआद्या अन्नधानाध्यसृज्यन्त. तस्माद्भूयागंसोऽन्येभ्यो भूयिष्ठाहिदेवताअन्वसृज्यन्त. पत्तएकविंगंशं निरमिमीत तमनुष्टुप्छन्दोऽन्वसृज्यत. वैराजगंसाम शूद्रोमनुष्याणामश्वःपशूनां. तस्मात्तौभूतसंक्रामिणावश्वश्चशूद्रश्च. तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः. नहिदेवताअन्वसृज्यत. तस्मात्पादाउपजीवतः पत्तोह्यसृज्येतां इत्यादि.

गीयतेच—

*चातुर्वर्ण्यं मयासृष्टं गुणकर्मविभागशः. इति.

तेचब्राह्मणादयश्चत्वारोवर्णाः वक्ष्यमाणतत्तत्कर्मार्हा इतिबोध्यं.

स्मर्यन्तेहि तत्तत्कर्माणि—

(ब्राह्मणधर्माः).

†अध्यापनं चाध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥

---

*गीतायां अ. ४.

†वैवनाथीये परिच्छेदः १. मनुपराशरादीनामनुवादः.

षण्णांतु कर्मणामस्य त्रीणिकर्माणि जीविका ।
याजनाध्यापनेचैव विशुद्धाच्च प्रतिग्रहः ॥

*शमोदमस्तपश्शौचं क्षान्तिरार्जवमेवच ।
ज्ञानंविज्ञानमास्तिक्यं ब्राह्मंकर्म स्वभावजं ॥

†मंत्रार्थज्ञोजपन्जुह्वन् तथैवाध्यापयन्द्विजः ।
स्वर्गलोकमवाप्नोति नरकन्तु विपर्यये ॥

नलोकवृत्तं वर्तेत वृत्तिहेतोः कदाचन ।
अजिह्मामशठांशुद्धां जीवेद्ब्राह्मणजीविकां ॥

अजीवंस्तु यथोक्तेन ब्राह्मणस्स्वेनकर्मणा ।
जीवेत्क्षत्रियधर्मेण सह्यस्यप्रत्यनन्तरः ॥

उभाभ्यामप्यजीवंस्तु कथंस्यादितिचेद्भवेत् ।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविका ॥

कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयंकृतं ।
आपत्कालेस्वयंकुर्वन्नैनसा युज्यतेद्विजः ॥

फलोपलक्षौमसोममनुष्यापूपवीरुधः ।
तिलौदनरसक्षारदधिक्षीरं जलंघृतं ॥

---

*गीतायां अ. १८.

†पराशरमाधवीये वैद्यनाथीयेच मन्वादीनांवचनानुवादः

शस्त्रासवं मधूच्छिष्टं मधुलाक्षाच बर्हिषः ।
मृच्चर्मपुष्पकुतुपकेशतक्रविषं क्षितिः ॥

कौशेयगन्धलवणमांसैकशफसीसकान् ।

शाकाद्यौषधिपिण्याकपशुगन्धांस्तथैवच ।
वैश्यवृत्त्यापि जीवन्नोविक्रीणीत कदाचन ॥

कृषिश्शिल्पंभृतिर्विद्या कुसीदं शकटं गिरिः ।
सेवानूपोभैक्षचर्यमापत्तौजीवनानितु ॥

इत्यादिज्ञेयं.

(क्षत्रियधर्माः).

*प्रजानां रक्षणं दानमिज्याध्ययनमेवच ।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥

†यथाहि मालाकारः आरामे यदायदा यद्यत्पुष्पं विकसति तदातदा तद्विचिनोति न तु पुष्पलतामुन्मूलयति तथा प्रजाभ्यः करमाददानो राजा यथोदयं षष्ठभागं गृण्हीयात्. अंगारकारकस्तु यथावृक्षमुन्मूल्य सर्वात्मना दहति न तु तथा प्रजाः पीडयेत्.

*मनु अ. १.

†पराशरमाधवीये अ. १.

*मासानष्टौ यथा सूर्यस्तोयंहरति रश्मिभिः ।
सूक्ष्मेनैवाभ्युपायेन तथा शुल्कादिकं नृपः ॥

क्रयविक्रयमध्वानं भक्तं च सपरिव्ययं ।
योगक्षेमं च संप्रेक्ष्य वणिजो दापयेत्करान् ॥

†अलब्धमीहेद्धर्मेण लब्धं यत्नेनपालयेत् ।
पालितंवर्धयेन्नीत्या वृद्धं पात्रेषुनिक्षिपेत् ॥

यस्मिन्देशे यआचारो व्यवहारः कुलस्थितिः ।
तथैव परिपाल्योसौ यदावशमुपागतः ॥

कुलानि जातीश्श्रेणीश्च गणान् जानपदानपि ।
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि ॥

‡योयोवर्णो-पहीयेत यश्चोद्रेकमनुव्रजेत् ।
तंतंदृष्ट्वा स्वतोमार्गात्प्रच्युतं स्थापयेत्पथि ॥

अदंड्यान्दन्डयन् राजा दंड्यांश्चैवाप्यदण्डयन् ।
अयशोमहदाप्नोति नरकं चाधिगच्छति ॥

§नबिभेतिरणाद्योवै संग्रामेप्यपराङ्मुखः ।
धर्मयुद्धे मृतोवापि तेनलोकत्रयं जितं ॥

---

*पराशरमाधवीये अ. १. मन्वादीनामनुवादः.

†याज्ञवल्क्यस्मृतौ का. १.

‡पराशरमाधवीये अ १. नारदादिवचनानुवादः.

§महानिर्वाणे अ. ८.

*अदीर्घसूत्रस्स्मृतिमानक्षुद्रोपरुषस्तथा ।
धार्मिको–व्यसनश्चैव प्राज्ञश्शूरो रहस्यवित् ॥

ब्राह्मणेषुक्षमी स्निग्धेष्वजिह्मः क्रोधनोरिषु ॥
स्याद्राजा भृत्यवर्गेषुप्रजासुच यथापिता ॥

महोत्साहस्स्थूललक्षः कृतज्ञो वृद्धसेवकः
विनीतस्ससत्वसंपन्नः कुलीनस्सत्यवाक्शुचिः ॥

पुण्यषड्भागमादत्ते न्यायेनपरिपालयन् ।
सर्वदानाधिकं यस्मात्प्रजानांपरिपालनं ॥

†दुष्टानांशासनाद्राजा शिष्टानांपरिपालनात् ।
प्राप्नोत्यभिमतान्लोकान् वर्णसंस्थाःकरोतियः ॥
इत्यादिज्ञेयं.

(वैश्यधर्माः).

‡पशूनां रक्षणं दानं इज्याध्ययनमेवच ।
वणिक्पथंकुसीदंच वैश्यस्य कृषिमेवच ॥

मणिमुक्ताप्रवाळानां लोहानां तान्तवस्यच ।
गन्धानां च रसानां च विद्यादर्घबलाबलं ॥

---

*याज्ञवल्क्यस्मृतौ, का. १.　　†विष्णुपुराणे अं. ३. अ. ८.
‡पराशरमाधवीयेमन्वादिवचनानुवादः.

धर्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमास्थितः ।
यः करोति जडान् साधून् वणिक्कर्मणि वंचितान् ॥
स याति नरकं घोरं धनं तस्यापि हीयते ।

इत्यादिज्ञेयं.

(शूद्रधर्माः)

*एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥

†शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते ।
अन्यथाकुरुतेकिंचित् तद्भवेत्तस्यनिष्फलं ॥

‡पुत्रदारात्ययंप्राप्तोजीवेत्कारुककर्मभिः ।
यैःकर्मभिस्सुचरितैश्शुश्रूष्यंते द्विजातयः ॥

अतएव–कर्षणपशुपालनभारोद्वहनपण्यव्यवहरणचित्रकर्मनृत्तगीतवीणावेणुमृदंगवादनादीनि च शूद्रधर्माः.

‡लवणं मधु तैलंच दधि तक्रं घृतं पयः ।
नदुष्येच्छूद्रजातीनां कुर्यात्सर्वेषुविक्रयं ॥

विक्रीणन् मद्यमांसानि ह्यभक्ष्यस्यचभक्षणं ।
अगम्यागमनंकुर्वन् शूद्रःपतति तत्क्षणात् ॥

---

*मनु. अ. १. †पराशरमाधवीये अ. १. ‡विज्ञानेश्वरीये अ. १.

*स्वाहाकारनमस्कारमात्रं शूद्रे विधीयते ।
ताभ्यां शूद्रः पाकयज्ञैः यजेत ब्राह्मणान्स्वयं ॥

नमस्कारेण मंत्रेण पंचयज्ञान्नहापयेत् ।

नमस्कारमन्त्रस्तु—नमश्शब्दमात्रमितिकेचिद्वदन्ति. अन्येतु—

*देवताभ्यः पितृभ्यश्च महायोगिभ्यएवच ।
नमस्स्वधायै स्वाहायै नित्यमेव नमोनमः ॥ इति
वदन्ति. इत्यादिज्ञेयं.

(वर्णधर्मप्रयोजनं)

एताभिः वर्णधर्मव्यवस्थाभिः बहूनि प्रयोजनानि सन्दृश्यन्ते. तथाहि—

एवं तत्तद्वर्णधर्मव्यवस्थासत्वे खलु मयेयं विद्याऽवश्यमभ्यसनीया मयेयंवृत्तिरवश्यमनुसरणीया अन्यथा प्रत्यवायी स्यामिति निश्चितमतिस्तत्तज्जनः अत्यायाससाध्येप्यल्पफलेपि स्वस्वकर्मण्येव सादरंप्रवर्तेत. तथा सति सर्वेपि विशेषतः तत्तत्कार्यतत्वानुभवशालिनश्च भवेयुः. अथ तदपेक्षया तत्सुतास्तदपेक्षया तत्सुतास्तदपेक्षया तत्सुतादयश्चेति क्रमेण प्रवृत्तास्सर्वेपि तत्त-

---

*पराशरमाधवीये, अ. १. मनुयाज्ञवल्क्याद्यनुवादः.

त्कार्येष्वतीव प्रागल्भ्यमुपलभेरन्. अनुभूयते हि लोके योयज्जन्यः स तद्वृत्तौ तद्विद्यादिषु वा यथा सुललितं प्रवर्तेत यथा च चातुर्यातिशयमवाप्नुयात् तदन्यस्त्वय-माबाल्यात्तत्संगवानपि न तथेति. तथाचएवमेवाशे-षाणां संप्रवृत्तौ लोके तत्र तत्र सर्वाश्च विद्याः प्रवर्धेरन्. सकलाश्च धर्माः श्रूयेरन्. समस्तप्रजायोगक्षेमाः समु-ल्लसेयुः. निखिलान्यपि पण्यानि निरीक्ष्येरन्. अखि-लान्यपि सस्यफलान्युत्पद्येरन्. समग्राणि शिल्पानि सन्दृश्येरन्. सांकर्यंच नभवेत्.

एवं क्रमेण लोकमर्यादाभिवृद्ध्या प्रजानां सर्वथा प्यैहिकामुष्मिकानुकूल्यमेव संभवेत्.

एवंवर्णधर्मव्यवस्था-भावे तु सर्वाणि कर्माणि सर्व-साधारणानीति ज्ञानवशात् मया एवमेव प्रवर्तनीय-मिति कस्यापिनिर्बन्धाभावेनच पैत्रीमपि वृत्तिं परित्यज्य या च वृत्तिस्सुप्रापा झडित्यर्थप्रदा च तामेव सर्वेप्यनुस-रेयुः. एवमेव तत्पुत्रपौत्रादिक्रमेण सर्वेषां प्रवृत्तौ ऐहि-कामुष्मिकोपयोगिन्योपि कष्टसाध्याइति. तैस्तैः परि-त्यज्यमानाः काश्चिद्विद्याः केचिन्न्यायविचाराः कानि चिद्वाणिज्यानि कानिचित् शिल्पादीनि च विनश्येयुः.

एवंक्रमेण लोकमर्यादाहानौ प्रजानामानुकूल्यं हीयेतैव. इत्यादिगुणदोषौ समालोच्य—

* सर्वस्यास्यहि सर्गस्य गुप्त्यर्थं स महाद्युतिः ।
मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयत् ॥ इत्यादिज्ञेयं.

तथाच येच जनाः स्वधर्मममुंचन्तः परधर्मं विमुंचन्तः प्रवर्तन्ते तेषामैहिकामुष्मिकफलं सिध्यति. भगवदनुग्रहश्चसंभवति. अन्यथा प्रवर्तन्ते चेत् इतो भ्रष्टास्ततोभ्रष्टाश्च भवन्ति.

गीयतेहि—

† श्रेयान् स्वधर्मोविगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावविहितं कर्म कुर्वन्नाप्नोति किल्बिषं ॥
सहजं कर्म कौन्तेय सदोषमपि नत्यजेत् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततं ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ इति.

प्रतिपाद्यतेच्च भगवता—

‡ वर्णानामाश्रमाणांच यामर्यादामयाकृता ।
तां ये समनुवर्तन्ते प्रसादस्तेषु संभवेत् ॥ इत्यादिज्ञेयं.

---

*मनु अ. १. †गीता अ. १८.
‡वैद्यनाथीये आचारप्रशंसायामुदाहृतं.

आश्रमयोग्योधर्मः आश्रमधर्मः आश्रमोनाम तत्व-ज्ञानप्रयोजकव्रतविशेषः. आश्रमश्चतुर्विधः ब्रह्मचर्य-गार्हस्थ्यवानप्रस्थसन्यासभेदात्. प्रतिपाद्यन्ते हि तत्र-द्धर्माः—

(ब्रह्मचर्यं).

*बालःकृतोपनयनो वेदाहरणतत्परः ।
गुरुगेहे वसेद्भूप ब्रह्मचारी समाहितः ॥
शौचाचारवता तत्र कार्यं शुश्रूषणं गुरोः ।

एवं—

†उपनीतोद्विजोवेदमधीयीत समाहितः ।
दंडं यज्ञोपवीतंच्च मेखलांच तथैवच ॥
कृष्णाजिनंच काषायं शुक्लंवावस्त्रमुत्तमं ।
धारयेन्मंत्रतोविद्वान् स्वसूत्रोक्तैकमार्गतः ॥
भिक्षाहारोयथाकामं गुरुशुश्रूषणे रतः ।
धारयेद्बैल्वपालाशौ दंडौ केशान्तिकौ द्विजः ॥
अग्निहोत्रं तथाकुर्यात्सायंप्रातस्स्वसूत्रतः ।
नित्यनैमित्तिकंकर्म मोक्षकामनयाथवा ।
विध्युक्तमितिबुध्यावा शांतोभूत्वा समाचरेत् ॥

*विष्णु अं. ३. अ. ९.  †स्कान्देसूतसंहितायां अ. ३३.

अन्यच्च—

*अष्टमे वर्षे ब्राह्मणमुपनयेत्. गर्भाष्टमेवा. एकादशे क्षत्रियस्य. द्वादशे वैश्यस्य. आषोडशाद्ब्राह्मणस्यानतीतः कालः. आद्वाविंशात् क्षत्रियस्य. आचतुर्विंशाद्वैश्यस्य अतऊर्ध्वंपतितसावित्रीकाः भवन्ति. इत्यादिज्ञेयं.

(गार्हस्थ्यं).

†अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥

‡त्रिंशद्वर्षोदशाब्दान्तु भार्यां विन्देत नग्निकां ।
एकविंशतिवर्षोवा सप्तवर्षामवाप्नयात् ॥

त्र्यष्टवर्षोष्टवर्षां वा धर्मे सीदति तत्परः ॥

§विधिनावाप्तदारस्तु धनं प्राप्य स्वकर्मणा ।
गृहस्थकार्यमखिलं कुर्याद्भूपाल शक्तितः ॥

निवापेन पितॄनर्चन् यज्ञैर्देवान् तथातिथीन् ।
अन्नैः मुनींश्वस्वाध्यायैःअपत्येनप्रजापतिं ॥

भूतानिबलिभिश्चैव वात्सल्येनाखिल जगत् ॥
प्राप्नोतिलोकान्पुरुषो निजकर्मसमार्जितान् ॥

---

*आश्वलायनगृह्यसूत्रे अ. १. ख. १९. †याज्ञवल्क्यस्मृतौ अ १.
‡पराशरमाधवीये अ. १. मन्वादीना मनुवादः.
§विष्णुपुराणे अं. ३. अ. ९.

*देवान् ऋषीन् मनुष्यांश्च पितॄन् गृह्याश्च देवताः ।
पूजयित्वा ततःपश्चात् गृहस्थश्शेषभुग्भवेत् ॥

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणं ।
होमो दैवो बलिर्भौमो नृयज्ञोतिथिपूजनं ॥

पंचैतान्योमहायज्ञान्नहापयति शक्तितः ।
सगृहेपि वसन्नित्यं सूनादोषैर्नलिप्यते ॥ इति.

ते च सूनादोषाः मुसलोलूखलघरट्टचुल्लीजलकुम्भशूर्प मार्जन्याद्युपयोगकाले प्रमादाज्जायमानप्राणिहिंसारूपाः एवं—

†नित्यादिकर्मकुर्वाणस्तीर्थयात्रापरायणः ।
पुष्यन् पोष्यगणं साधु साधयेत्परमां गतिं ॥

पोष्यवर्गस्तु—

‡माता पिता गुरुर्भार्या प्रजा दीनस्समाश्रितः ।
अभ्यागतोतिथिश्चाग्निःपोष्यवर्गउदाहृतः ॥ इति.

एवमनृणोयः पुत्री यज्वा ब्रह्मचारी वासीवेत्यादयोपिज्ञेयाः.

‡देवैश्चैवमनुष्यैश्च तिर्यग्भिश्चोपजीव्यते ।
गृहस्थःप्रत्यहंयस्मात्तस्माच्छ्रेयान्गृहाश्रमी ॥

---

*मनुस्मृतौ अ. ३. †स्कांदवचनं.

‡पराशरमाधवीये बार्हस्पतादिवचनानुवादः.

अत्रेदमवधेयं—

यानिचवक्ष्यमाणानि कर्माणि दिनेदिनेकर्तव्यानीति वीप्सया अकरणे प्रत्यवायश्रवणेन करणेऽभ्युदयश्रवणे नच नित्यानीत्यवगम्यन्ते तान्येतानि सर्वैर्द्विजैर्यावज्जीवमवश्यमनुष्ठेयान्येव. एतावतामपिकर्मणामनुष्ठानविषये स्वयमलसाश्चेत् तेचजनाः पातित्यमुपेत्य स्वयमधोगतिमेवापद्येरन्.

स्मर्यतेहितदेतत्सर्वं—

*यथाकथंचिन्नित्यानि शक्त्यवस्थानुरूपतः ।
येनकेनापि कार्याणि नैवनित्यानि लोपयेत् ॥

†सन्ध्यास्नानं जपो होमो देवतानांचपूजनं ।
आतिथ्यं वैश्वदेवंच षट्कर्माणि दिनेदिने ॥

*सततं प्रातरुत्थाय दन्तधावनपूर्वकं ।
आचरेदुषसिस्नानं तर्पयेद्देवमानुषान् ॥

उषस्युषसि यत्स्नानं सन्ध्यायामुदितेपिवा ।
प्राजापत्येनतत्तुल्यं सर्वपापप्रणाशनं ॥

---

*पराशरमाधवीये अ. १. यमदक्षगोबिलादिवचनानुवादः.

†पराशरस्मृतौ अ. १.

सर्वमर्हति शुद्धात्मा प्रातस्स्नायी जपादिकं ।
अस्नात्वा नाचरेत्कर्म जपहोमादिकंचयत् ॥
प्रातर्मध्याह्नयोस्स्नानं वानप्रस्थगृहस्थयोः ।
यतेस्त्रिषवणस्नानं सकृच्चब्रह्मचारिणः ॥
सन्धौ सन्ध्यामुपासीत नास्तगेनोद्गते रवौ ।
सन्ध्यात्रयन्तु कर्तव्यं द्विजेनात्मविदा सदा ॥
अध्यर्धयाममासायं सन्ध्या माध्याह्नकीष्यते ।
गायत्रीं शिरसासार्धं जपेद्व्याहृतिपूर्विकां ॥
सहस्रपरमांदेवीं शतमध्यां दशावरां ।
गायत्रींतु जपेन्नित्यं सर्वपापप्रणाशनीं ॥
नभिन्नांप्रतिपद्येत गायत्रीं ब्रह्मणासह ।
प्रतिग्रहादन्नदोषात्पातकादुपपातकात् ।
गायत्रीप्रोच्यते तस्माद्गायन्तंत्रायतेयतः ॥
लोकवार्तादिकंश्रुत्वा दृष्ट्वास्पृष्ट्वा प्रभाषितं ।
संख्यांविनाच यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥
संध्यामुपासतेयेतु सततं संशितव्रताः ।
विधूतपापास्तेयान्ति ब्रह्मलोकं सनातनं ॥
यदह्नात्कुरुतेपापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमांसन्ध्यां प्राणायामैस्तु हन्ति तत्॥

यद्रात्र्यात्कुरुतेपापं कर्मणा मनसा गिरा ।
पूर्वांसन्ध्या मुपासीनः प्राणायामैर्व्यपोहति ॥
ऋषयोदीर्घसंधित्वात्सर्वमायुरुपाययुः ।
प्रज्ञां यशश्च कीर्तिंच ब्रह्मवर्चसमेववा ॥
उपतिष्ठन्ति वै सन्ध्यां ये नपूर्वां नपश्चिमां ।
व्रजन्तितेदुरात्मानस्तामिस्त्रं नरकं नृप ॥
सन्ध्याहीनोशुचिर्नित्यमनर्हस्सर्वकर्मसु ।
यदन्यत्कुरुते कर्म नतस्य फलभाग्भवेत् ॥
सन्ध्या येननविज्ञाता सन्ध्यायेनानुपासिता ।
जीवमानोभवेच्छूद्रो मृतश्श्वानोभिजायते ॥
अनार्तश्चोत्सृजेद्यस्तु सविप्रश्शूद्रसम्मितः ।
प्रायश्चित्तीभवेच्चैव लोकेभवति निन्दितः ॥
सूतकेमृतकेचैव सन्ध्याकर्म नसन्त्यजेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ॥
नत्यजेत्सूतकेवापि त्यजन् गच्छत्यधोगतिं ।
एतद्विदित्वा यस्सन्ध्यामुपास्ते संशितव्रतः ।
दीर्घमायुस्सविंदेत सर्वपापैःप्रमुच्यते ॥
येनास्तिकानिष्क्रियाश्च गुरुशास्त्रातिलंघिनः ।
अधर्मज्ञादुराचारास्तेभवन्ति गतायुषः ॥

भ्रष्टोयस्त्वाश्रमाचारात् पतितस्सोभिधीयते ।

§वेदोवा हरिभक्तिर्वा भक्तिर्वापि महेश्वरे ।
स्वाचारात्पतितंमूढं नपुनाति द्विजोत्तमं ॥

*यस्मिन्देशे यआचारो न्यायदृष्टस्तुकल्पितः ।
सतस्मिन्नेव कर्तव्योदेशाचारस्स्मृतोभृगोः ॥

अनुष्ठितंचयद्देवैर्मुनिभिर्यदनुष्ठितं ।
नानुष्ठेयं मनुष्यैस्तदुक्तंकर्म समाचरेत् ॥

†नास्तिक्यंवेदनिंदांच देवतानांच कुत्सनं ।
द्वेषं दंभंच मानंच क्रोधं तैक्ष्ण्यंच वर्जयेत् ॥

‡धीमान् ह्रीमान् क्षमायुक्तः आस्तिको विनयान्वितः ।
विद्याभिजनवृद्धानां यातिलोकाननुत्तमान् ॥

§यथेक्षुहेतोस्सलिलं निषेवितं तृणानिवल्लीरपिच प्रसिंचति ।
एवंनरो धर्मपथेन वर्तयन् यशश्चकामांश्च वसूनिसोश्नुते ॥ इत्यादि.

---

*पराशरमाधवीये अ. १. †मनु अ. ४.

‡विष्णुपुराणे अं ३, अ १२. §वैद्यनाथीयेआचारप्रशंसायामुदाहृत:

गीयतेचभगवता—

*कर्मणैवहि संसिद्धिमास्थिताजनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥

नमेपार्थास्तिकर्तव्यं त्रिषुलोकेषुकिंचन ।
नानवाप्तमवाप्तव्यं वर्तएवच कर्मणि ॥

नबुद्धिभेदंजनयेदज्ञानांकर्मसंगिनां ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तस्समाचरन् ॥

इत्यादिज्ञेयं.

(वानप्रस्थं).

†द्वितीयमायुषोभाग मुषित्वातु गृहे द्विजः ।
तृतीयमायुषोभागं गृहमेधी वनेवसेत् ॥

सन्त्यज्य ग्राम्यमाहारं सर्वंचैतत्परिच्छदं ।
पुत्रेषु भार्यांनिक्षिप्य वनंगछेत्सहैववा ॥

मुन्यन्नैर्विविधैर्मेध्यैश्शाकमूलफलेनवा ।
एतैरेव महायज्ञान् निर्वपेद्विधिपूर्वकं ॥

अत्राप्याश्रमे सकलसांसारिकधर्मपरित्यागपूर्वकमरण्याश्रयादिविधानात् चित्तोपशान्तेरानुकूल्यं भवेदेवेत्युपरितनोयंपन्थाः. इत्यादिज्ञेयं.

---

*गीता अ. ३ †वैद्यनाथीयेमन्वाद्यनुवादः.

(सन्यासः).

*अधीत्यविधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वाच शक्तितोयज्ञैर्मनोमोक्षेनिवेशयेत् ॥

वनेषुतु विहृत्यैवं तृतीयंभाग मायुषः ।
चतुर्थमायुषोभागं गत्वा संगान्परित्यजेत् ॥

अग्नीनात्मनि संस्थाप्य द्विजः प्रव्राजितोभवेत् ।
योगाभ्यासरतश्शान्तो ब्रह्मविद्यापरायणः ॥

एकरात्रं वसेद्ग्रामे नगरे पंचरात्रकं ।
वर्षाभ्योन्यत्र वर्षासुमासांश्चचतुरो वसेत् ॥

शिखाज्ञानमयी यस्य उपवीतंतु तन्मयं ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदोविदुः ॥

अस्मिन्नाश्रमे सर्वसंगपरित्यागपूर्वकं ब्रह्मविचारस्यैव प्राधान्येन विधानात् साक्षान्मोक्षोपयोगित्वं संभवतीति ऊर्ध्वतरोयंसोपानपथः.

एषुचतुर्ष्वाश्रमेषु ब्रह्मचर्याश्रमः सर्वेषांद्विजानां नियतोभवति. अन्यथा द्विजत्वासिध्या तत्तत्कर्मानुष्ठानयोग्यता–भावस्स्यात्. गार्हस्थ्यादयस्तु सकामनानां

*पराशरमाधवीये अ. १. मन्वादिवचनानुवादः.

यथाक्रमेणाश्रयणीयाःभवन्ति. विरक्तश्चेत् यत्रविरक्तिस्ततएवाश्रमात्प्रव्रजेत्.

श्रूयतेहि—

*ब्रह्मचर्यंपरिसमाप्य गृहीभवेत् गृहीभूत्वावनीभवेत् वनीभूत्वाप्रव्रजेत् यदिवेतरथा ब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वा वनाद्वा. इति.

एवं एषुगार्हस्थ्यब्रह्मचर्यवानप्रस्थसन्यासक्रमेण—

†चत्वारोब्राह्मणस्योक्ता आश्रमाश्श्रुतिचोदिताः ।
क्षत्रियस्य त्रयःप्रोक्ताः द्वावेकोवैश्यशूद्रयोः ॥
इत्यादिज्ञेयं.

अत्रायंविशेषः—

†एषांचतुर्णामप्याश्रमाणामेकैकस्य चातुर्विध्यात् आश्रमाःषोडशधाभवंति. तथाहि—तत्र ब्रह्मचारिणश्चतुर्विधाभवंति गायत्रोब्राह्मःप्राजापत्योबृहन्निति. उपनयनादूर्ध्वंत्रिरात्रमक्षारलवणाशी गायत्रीमधीते सगायत्रः. अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यंचरेत् प्रतिवेदंद्वादशद्वादशवा यावद्ग्रहणांतंवावेदस्य सब्राह्मः. स्वदारनिरतः ऋतुकालाभिगामी सदापरदारवर्जितस्सप्राजापत्यः. आप्रायणाद्गुरोरपरित्यागी सनैष्ठिकोबृहन्निति.

---

*जाबालश्रुतिः †पराशरमाधवीये अ १.

गृहस्थाअपि चतुर्विधाभवंति—वार्ताकवृत्तयश्शालीनवृत्तयो यायावराघोरसन्यासिकाश्चेति. तत्रवार्ताकवृत्तयः कृषिगोरक्षवाणिज्यमगर्हितमुपयुंजाना श्शतसंवत्सराभिःक्रियाभिर्यजंतः आत्मानंप्रार्थयंते. शालीनवृत्तयोयजंतोनयाजयंतः अधीयानानाध्यापयंतः ददतोनप्रतिगृह्णंतः शतसंवत्सराभिःक्रियाभिर्यजंतः आत्मानंप्रार्थयंते. यायावराःयजंतोधीयाना अध्यापयंतोददतः प्रतिगृह्णंत श्शतसंवत्सराभिःक्रियाभिर्यजंतः आत्मानंप्रार्थयंते. घोरसन्यासिका उद्धृतपरिपूताभिरद्भिःकार्यं कुर्वंतःप्रतिदिवसमास्तृतोंछवृत्तिमुपयुंजाना श्शतसंवत्सराभिःक्रियाभिर्यजंतः आत्मानंप्रार्थयंते.

वानप्रस्थाअपि चतुर्विधाभवंति—वैखानसा औदुंबरा वालखिल्याः फेनपाश्चेति. तत्रवैखानसाः अकृष्टपच्यौषधिवनस्पतिभिर्ग्रामबहिष्कृतिभिः अग्निपरिचरणंकृत्वा पंचमहायज्ञान्निर्वर्तयंतः आत्मानंप्रार्थयंते. औदुंबराः बदरनीवारश्यामाकैरग्निपरिचरणंकृत्वा पंचमहायज्ञक्रियां निर्वर्तयंतः आत्मानंप्रार्थयंते. वालखिल्याः जटाधराश्चीरचर्मवल्कलपरिवृताः कार्तिक्यांपौर्णमास्यां पूर्वफलमुत्सृजंतः शेषानष्टौमासान् वृत्त्युपार्जनंकृत्वाऽग्निपरिचरणंकृत्वा पंचमहायज्ञक्रियां निर्वर्तयंतआत्मानं-

प्रार्थयंते. फेनपाः जीर्णपर्णफलभोजिनोयत्रतत्रवा-वसन्तः.

परिव्राजकाअपि चतुर्विधाभवंति—कुटीचका ब-हूदका हंसाः परमहंसाश्चेति. तत्रकुटीचकाः स्वपुत्रगृहेषु भैक्षचर्याचरंतः आत्मानंप्रार्थयंते. बहूदकास्त्रिदंडकमंडलुजलपवित्रपादुकासनशिखायज्ञोपवीतकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षंचरंतः आत्मानंप्रार्थयंते. हंसाः एकदंडधराश्शिखायज्ञोपवीतधारिणः कमंडलुहस्ताग्रामैकरात्रवासिनोनगरे तीर्थे—ष्टौचपंचरात्रंवसंतः एकरात्रं द्विरात्रं कृच्छ्रचांद्रायणादिचरंतःआत्मानंप्रार्थयंते. परमहंसानाम एकदंडधराः कंथाकौपीनवाससोव्यक्ताव्यक्तलिंगाअनुन्मत्ता उन्मत्तवदाचरंतः त्रिदंडकमंडलुशिक्यपद्मजलपवित्रपादुकासन शिखायज्ञोपवीतत्यागिनः शून्यागारदेवगृहवासिनः. नतेषांधर्मोनाधर्मः. नसत्यंनापिचानृतं. सर्वसहास्सर्वसमास्समलोष्टाश्मकांचनायथोपपन्नभैक्षचर्याचरंतः आत्मानं मोक्षयंते.

*तेषामुपशमोधर्मोनियमोवनवासिनां ।
दानमेकंगृहस्थानांशिश्रूषाब्रह्मचारिणां ॥

इत्यादिज्ञेयमित्याश्रमधर्मः

---

*पराशरमाधवीयाद्वितीयाध्यायांते.

वर्णाश्रमोभयानुगतोधर्मोवर्णाश्रमधर्मः.

सचधर्मस्स्मर्यतेहि—

*ब्राह्मणोबैल्वपालाशौ क्षत्रियोवाटखादिरौ ।

पैलवौदुंबरौवैश्योदंडानर्हंतिधर्मतः ॥ इत्यादिज्ञेयं.

गुणधर्मश्शास्त्रीयाभिषेकादियुक्तस्यराज्ञः प्रजापरिपालनादिः. प्रतिज्ञातार्थपरिपालनरूपइत्यादिज्ञेयं.

निमित्तधर्मस्तु ग्रहणसंक्रमादिनिमित्तेसति कर्तव्य स्नानतर्पणादिरूपः. कृतेपातके तत्परिहारनिमित्तंकर्तव्यप्रायश्चित्तादिरूपश्च. पातकन्तु अपकृष्टजन्माति-मौढ्यापयशोदारिद्र्यनरकादिप्रापकनिषिद्धकर्माचरणरूपं. तच्चपातकंत्रिविधं महापातकं समपातकं उपपातकंचेति. तत्रब्रह्महत्यासुरापानस्वर्णस्तेयगुरुदाराभिगमनानि तद्वतस्संसर्गश्चेतिपंच महापातकानि.

स्मर्यंतेहिसमपातकोपपातकानि—

†गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।

ब्रह्महत्यासमं ज्ञेयं अधीतस्य च नाशनं ॥

निषिद्धभक्षणं जैह्मचं कूटसाक्ष्यं वचोनृतं ।

रजस्वलामुखास्वादः सुरापानसमानि तु ॥

---

*मनु अ, १.

†याज्ञवल्क्यस्मृतौ अ. ३.

अश्वरत्नमनुष्यस्त्रीभूधेनुहरणंतथा ।
निक्षेपस्य च सर्वं हि सुवर्णस्तेयसम्मितं ॥
सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ।
सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं स्मृतं ॥

इतिसमपातकानि ज्ञेयानि.

गोवधो व्रात्यता स्तेयमृणानां चानपक्रिया ।
स्त्रीशूद्रविट्क्षत्रवधोनिन्दितार्थोपजीवनं ॥
नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ।
पितृमातृसुतत्यागस्तटाकारामविक्रयः ॥
तथैवानाश्रमेवासः परान्नपरिपुष्टता ॥
असच्छास्त्राधिगमनमाकरेष्वधिकारिता ।
भार्यायाविक्रयश्चेषामेकैकमुपपातकं ॥ इत्यादिज्ञेयं.

अत्रेदमवगन्तव्यं—

जायमानस्यहिद्विजस्य चत्वारिंशत्संस्काराः विधीयन्ते. तेचसंस्काराः गर्भाधानं पुंसवनं सीमन्तः जातकर्म नामकरणमन्नप्राशनं चौल मुपनयनं चत्वारिवेदव्रतानि स्नानं विवाहः पंचयज्ञानुष्ठानं अष्टकादिसप्तपाकयज्ञाः सप्तहविर्यज्ञाः सप्तसोमसंस्थाश्चेति चत्वारिंशत्संख्याकाः. एषु गर्भाधानादयःपूर्वसंस्काराइति ब्राह्म-

संस्काराइतिच व्यवह्रियन्ते. अष्टकादयस्तु उत्तरसंस्काराइति दैवसंस्काराइतिच प्रतिपाद्यंते. एतेषु गर्भाधानाद्युपनयनान्तास्सर्वैर्द्विजैरवश्यमनुष्ठेयाएव. तदनन्तरास्तु यस्य ब्रह्मचर्यएवप्रव्राजितुमिच्छा तस्यानावश्यकाः. तदन्येषामावश्यकाएव. शूद्रस्यतु अमन्त्रकास्सविवाहाश्चौलावधिकास्संस्काराविहिताः. इत्यादि.

(विशेषधर्मप्रयोजनं).

एतैस्संस्कृतस्यफलविशेषस्स्मर्यतेहि—

*ब्राह्मेणसंस्कारेण संस्कृतः ऋषीणां समानतांसायुज्यं गच्छति. दैवेनोत्तरेणसंस्कृतोदेवानां समानतां सलोकतां सायुज्यं गच्छतीति. एवं—

†संस्कारैस्संस्कृतःपूर्वै रुत्तरैरपि संस्कृतः।

नित्यमष्टगुणैर्युक्तः ब्रह्मणोब्राह्मलौकिकं॥

ब्राह्मंपदमवाप्नोति यस्मान्नच्यवतेपुनः॥ इतिच.

तेचगुणाः भूतदया क्षान्ति रनसूया शौच मनायासो मंगळ मकार्पण्य मस्पृहेतिच अष्टविधाः. तएतेगुणाः यस्य नसन्ति स तैस्संस्कारैस्संस्कृतोपि नतत्फलमवाप्नोति.

---

*हारीतसूत्रं.

†शंखस्मृतिः

सूत्र्यतेहि—

*यस्यैते चत्वारिंशत्संस्काराः नचाष्टावात्मगुणाः नस- ब्रह्मण स्सायुज्यं सालोक्यं गच्छति. इति.

तथाच—साधारणधर्माणां विशेषधर्माणांच अप्रमा- दमनुष्ठानेसति तेचजनाः स्वयमैहिकमामुष्मिकंच श्रेयः- फलमनुभवंतः क्रमेणपरांसिद्धिमुपयास्यन्ति.

स्मर्यतेहि—

†धर्मात्सुखंच ज्ञानंच ज्ञानान्मोक्षोधिगम्यतइति ॥

अन्यच्च—

एवंसर्वदापि पुमान् सद्धर्माचरणैकप्रवृत्तश्चेत् अभ्या- सवशात्तस्यमनस्सर्वदापि सात्विक्यामेववृत्तौ प्रवर्तते. साचवृत्तिर्दिनक्रमेण प्ररूढासती अन्तकालेपि सात्वि- कभावनामेवोपजनयति. तयाच सपुमान् सद्गतिमे- वाप्नोति. अन्यथाप्रवर्ततेचेदन्यथैव भवति.

गीयतेहि—

‡यदासत्वे प्रवृद्धेतु प्रळयं यातिदेहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥
रजसिप्रळयंगत्वा कर्मसंगिषुजायते ।
तथाप्रलीनस्तमसि मूढयोनिषुजायते ॥ इत्यादि.

---

*गौतमसूत्रं. †पराशरमाधवीये अ. १. ‡गीतायां अ. १४.

अपरंच—

सामान्यतः कर्मतावत्त्रिविधं नित्यंनैमित्तिकं काम्यं चेति. तत्र नित्यानांसन्ध्यावन्दनादीनां नैमित्तिकानां ग्रहणस्नानादीनांच अकरणेप्रत्यवायस्संभवति. करणेतु स्वोपात्तदुरितक्षयद्वारा भगवत्प्रीतिश्चित्तशुद्धिश्चफलं भवति नतदन्यत्फलमितिज्ञेयं. काम्यानान्तु पौंडरीकादीनां केषांचिद्व्रतादीनांच अकरणेप्रत्यवायोनास्ति· करणेतु फलविशेषःप्राप्यतएव. एवमेव जपहोमश्राद्धदानाराधनादीनांसर्वेषामपि फलंज्ञेयं.

तथाच येचयेच निष्कामनया कर्मकुर्वाणाः भगवंतमाराधयन्ति तेतेजनास्तत्वज्ञानसाधनसंपत्तिमन्तोभवन्ति.

श्रूयतेहि—

*तमेतंवेदानुवचनेन ब्राह्मणाविविदिषंति यज्ञेनदानेन तपसानाशकेनइत्यादि.

येचपुनःफलाकांक्षया तत्तत्कर्मकुर्वतः परमात्मानमाराधयन्ति तेपिजनास्तत्तत्कर्मफलमनुभूय पुनरावर्तंते.

गीयतेहि—

†त्रैविद्यामांसोमपाःपूतपापाःयज्ञैरिष्ट्वा स्वर्गतिंप्रार्थयन्ते ।
तेपुण्यमासाद्यसुरेंद्रलोकमश्नन्तिदिव्यान्दिविदेवभोगान्॥

---

*बृहदारण्ये अ ६, ब्रा ४.　　†गीतायां अ, ९.

तेतंभुक्त्वास्वर्गलोकंविशालं क्षीणेपुण्ये मर्त्यलोकंविशन्ति।
एवं त्रयीधर्ममनुप्रपन्नाःगतागतं कामकामा लभन्ते॥इति.

एवंच कृतानां कर्मणां लोकान्तरप्राप्तिर्जन्मान्तरप्राप्तिश्चेति द्वेधा फलं भवतीति बोध्यं. भाष्यतेहि—

*वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशकुलजातिरूपायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्तइतीति. श्रूयतेच—

†तद्यइह रमणीयच्चरणाः—रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा. अथ येइह कपूयच्चरणः—कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चंडालयोनिं वेतिच. तथाच—

यथाहि कश्चित्सार्वभौमः यथानिदेशं सत्कार्यकारिणो जनान् तत्तदधिकारिमुखेन बहुमानयन् उत्तमं पदमापादयति स्वाज्ञामतीत्य असत्कार्यकारिणस्तु कारागारादिमुखेन शिक्षयन् अधमं पदमापादयति एवं भगवानपि यथाशास्त्रं सद्धर्माचरणशीलानिन्द्रादिरूपेण संप्रीणयन् उत्तमं जन्म प्रापयति. शास्त्रमतिक्रम्य पापकर्मप्रवृत्तांस्तु नरकादिभिश्शिक्षयन् अधमं जन्म प्रापयतीत्यादिज्ञेयं.

---

*शांकरसूत्रभाष्ये अ. ३. पा, १. अधि, २. स्मृत्यर्थानुवादः.
†छान्दोग्येप्र ५. ख, १०.

तदेतच्च सामान्यतोपि गीयते-

*ऊर्ध्वं गच्छन्ति सत्वस्थाः मध्येतिष्ठन्तिराजसाः ।
जघन्यगुणवृत्तिस्थाः अधोगच्छंतितामसाः ॥ इति.

एवंच—पुण्याधिक्ये स्वर्गाद्युत्तमफलानुरूपं देवताजन्म भवति. पापाधिक्ये नरकाद्यधमफलानुरूपं-स्थावरतिर्यगादिजन्म भवति. साम्ये मध्यमफलानुरूपं मानवं जन्म भवतीति ज्ञेयं.

एवं—चक्रनेमिक्रमेण ऊर्ध्वाधो भ्रमतां संसारसागरावर्तगर्तेषु निपत्य निमज्जनोन्मज्जनायासमनुभवतां तत्तद्धर्मानुष्ठानक्षपितान्तःकरणकळंकानामपि जनानां श्रवणमननादिसाधनसंपत्त्यां सत्यामेव नित्यानन्दानुभवस्य प्रकाश्यमानतया सर्वैस्सर्वाश्चित्तवृत्तयः सर्वतः प्रवृत्तेर्निवर्त्य निवृत्तिधर्मे प्रवर्तयितव्याः. इत्यादिज्ञेयामिति विशेषधर्माः.

इति प्रवृत्तिधर्मनिरूपणं.

पूर्वभागस्समाप्तः.

---

*गीतायां अ, १४.

# आर्यधर्मप्रकाशिका.

## उत्तरभागप्रारम्भः.

### निवृत्तिधर्मप्रकरणम्.

निवृत्तिधर्मश्शमदमवैराग्यादयः. तेच तत्वज्ञान-साधनानि भवन्ति.

श्रूयतेहि—

*शान्तोदान्त उपरतास्तितिक्षुस्समाहितोभूत्वा आत्मन्येवात्मानं पश्यतीति.

गीयन्तेहि तत्तत्साधनानि भगवता—

†अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवं ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥

इन्द्रियार्थेषु वैराग्यमनहंकारएव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं ॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥

---

*बृहदारण्ये अ, ६, ब्रा, ४. †गीता अ, १३.

K

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥

अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनं । इति.

एतेचधर्माः तत्वज्ञानद्वारा मोक्षसाधकाः. तत्वज्ञानन्तु साक्षान्मोक्षकारणं भवति.

श्रूयतेहि—

*ज्ञात्वा तं मृत्युमत्येति नान्यः पन्थाः विमुक्तये इति. ब्रह्मविदाप्नोति परमित्यादिच.

तत्वज्ञानसाधकमुख्यकारणानि च त्रीणि श्रवणमनननिदिध्यासनानीति.

श्रूयतेहि—

†आत्मा वा अरे द्रष्टव्यश्श्रोतव्योमन्तव्योनिदिध्यासितव्यः इति.

प्रतिपाद्यतेच—

‡आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमं ॥ इति.

तत्र श्रवणंनाम गुरुमुखाद्वेदान्तवाक्यतात्पर्यावधारणं.

---

*कैवल्योपनिषदि. †बृहदारण्ये अ. ६. ब्रा. ५.

‡शांतधर्मे मुक्तिवादे वासिष्ठवचनानुवादः.

गुरुर्नाम तत्वानुभवशाली सिद्धःपुरुषः.

श्रूयतेहि—

*तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्. समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति.

वेदान्तवाक्यानितु—प्रज्ञानंब्रह्म. सदेवसोम्येदमग्र आसीत्. सत्यंज्ञानमनन्तं ब्रह्म. इत्यादीनि.

मननं नाम तत्तत्सन्दर्भसमन्वयानुकूलशास्त्रीययुक्तिपरिशीलनपूर्वकं गुरुमुखादवगतार्थानामनुचिन्तनं.

निदिध्यासनं नाम विगळितवेद्यान्तरं भगवतः परमात्मनोध्यानाभ्यासः. तानि च श्रवणमनननिदिध्यासनानि पुनःपुनः क्रियमाणानि सन्ति व्रीह्यभिघाताच्छुद्धान्तण्डुलानिव आवरणं परिहृत्य विनिर्मलं भगवत्स्वरूपमभिदर्शयन्ति. न तु सकृदाचरणमात्रादिति ज्ञेयं.

†(ध्यानं नाम शब्दादिभ्योविषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य प्रत्यक्चेतयितरि एकाग्रचिन्तनात्मकस्तैलधारावत्सन्तताविच्छिन्नप्रत्ययः). तथाच—

श्रवणमनननिदिध्यासनेषु—यश्चपुमान्समधिगततत्त्व-

---

*प्रथममुंडके ख. २. †शांकरगीताभाष्ये अ. १३.

द्वियः समनुष्ठिततत्कर्मः नितान्तनिर्मलस्वान्तः नित्यानित्यवस्तुविवेकवान् ऐहिकामुष्मिकानित्यफलविरक्तः शमादिषट्कसंपन्नश्चमुमुक्षुः—सएवाधिकारीतिज्ञेयं.

*(शमादिषट्कं च शमदमोपरतितितिक्षासमाधानश्रद्धाः. तत्र शमोनाम बाह्यविषयेभ्योन्तरिन्द्रियनिग्रहः. दमोनाम तेभ्यश्चक्षुरादिबहिरिन्द्रियनिग्रहः. उपरतिर्नाम निगृहीतानामिन्द्रियाणां पुनर्विषयेष्वप्रवेशनं. तितिक्षा नाम स्वभावतः शीतोष्णादिद्वन्द्वसहिष्णुता. समाधानं नाम निगृहीतस्य मनसः श्रवणमननाद्यनुरूपविषयेष्वेव निरन्तरप्रवर्तनं. श्रद्धा नाम गुरुवेदान्तवाक्येषु विश्वासः).

एतैर्गुणैस्संपन्नःभगवदनुग्रहपात्रीभूतोभवति.

तथाच—

†(येचाविवेकिनः सुखमात्रलिप्सवोदुःखानुविद्धसुखमात्रमुद्दिश्य शिरोमदीयं यदियाति यात्वितिकृत्वा परदारपरद्रव्यादिषु प्रवर्तमानाः नात्राधिकारिणः. येचविवेकिनः अस्मिन्संसारकांतारे कियन्तिदुःखदुर्दिनानि कियतीवा सुखखद्योतिकेति कुपितफणिफणामण्डलच्छायाप्रतिममिदमिति मन्यमानाः सुखमपि हातुमिच्छन्ति तेऽत्राधिकारिणः.) इतिज्ञेयं.

---

*वेदान्तसारे. †गादाधर्यांमुक्तिवादे.

एवंच—श्रवणमनननिदिध्यासनैस्तत्वज्ञानं तत्वज्ञानात्परमपुरुषार्थरूपोमोक्षस्संभवतीति सर्वानुगतःपन्थाः। तत्र तत्वविषये बहवोवादिनोविप्रतिपद्यन्ते. तेचवादिनोद्विविधाः नास्तिका आस्तिकाश्चेति.

*(नास्तिकमतविचारः).

तत्र नास्ति वेदप्रामाण्यमिति ब्रुवाणाः नास्तिकाः. ते त्रिविधाः चार्वाकाबौद्धाआर्हताश्चेति. तत्र चार्वाकाएव लौकायतिकाइति प्रतिपाद्यन्ते. बौद्धास्तावत्सौगतास्तथागताश्चेति व्यवह्रियन्ते. आर्हतास्तावद्दिगम्बराजैनाइति च प्रोच्यन्ते.

यद्यपि भगवान् बुद्धस्स्वयमेकएव बोधयिता तथापि तच्छिष्याः बौद्धास्तावत् स्वस्वभावनाभेदाच्चतुर्विधास्संजाताः सौत्रान्तिकाः वैभाषिकाः माध्यमिकाः योगाचाराश्चेति. तथाचैवं सामान्यतोनास्तिकाष्षड्विधाः. अन्ये चावान्तरभेदास्सन्ति.

(चार्वाकमतम्).

तत्र चार्वाकीये मते—पृथिव्यप्तेजोवायवइति चत्वारि भूतानि. तेभ्यएव देहाकारपरिणतेभ्यः किण्वादिभ्यो-

---

*अयंविचारः बौद्धाधिकारात् सर्वदर्शनसंग्रहात् शांकरसूत्रभाष्यात् रामानन्दीयवाचस्पत्यकल्पतरुपरिमळादिभ्यश्च संगृहीतः.

विज्ञानं चित्तमात्मेति च व्यवह्रियते. अन्येचत्वार-स्स्कन्धाश्चेत्ताःभवन्ति. प्रवृत्तिविज्ञानमेव सकलबाह्यार्थ-प्रकाशकारणं भवति.

जातानामेषां स्कन्धानां परिपाकोजरा. स्कन्ध-नाशोमरणमित्याद्युच्यते.

तथाचैषांपरमाणूनां स्कन्धानां च संघातस्सकल-जगदात्मना परिवर्तमानस्सकललोकयात्रानिर्वाहकोभव-ति. अत्रतावदवयविनामनंगीकारात् पर्यवसाने अवयवा-त्मना परिशिष्यमाणाः बाह्याः पदार्थाः भूतभौतिकरूपाः नप्रत्यक्षविषयीक्रियन्ते. किन्त्वनुमेयाभवन्तीत्यङ्गीकृत्य यत्सत्तत्क्षणिकं यथा विद्युज्जलधरपटलं इत्याद्यनुमानं च प्रमाणीकृत्य सर्वेषां पदार्थानां क्षणिकत्वं च अंगी-क्रियते. अन्यत्सर्वं चार्वाकवदित्यादि ज्ञेयमिति सौत्रा-न्तिकाः.

(वैभाषिकमतम्).

द्वितीये बाह्यं वस्तु प्रत्यक्षमेव. अन्यत्सर्वं पूर्ववदित्या दिज्ञेयमिति वैभाषिकाः.

(माध्यमिकमतम्).

तृतीये बाह्यमाभ्यन्तरं चेति सर्वमपि शून्यशून्यमेव. यथाहि—

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ।
कुणपः कामिनी भक्ष्यं इति तिस्रोविकल्पनाः ॥

ताश्चविकल्पनास्तत्तत्पदार्थाभावेपि तत्तदभावानेवावलम्ब्य तत्तत्पदार्थाकारेण परिवर्तन्ते विलीयन्तेच तद्वच्छून्यत्वमात्रावलम्बिनी काचिद्भावना तत्तज्जगदाकारेण परिवर्तमाना तत्तदाकारनिवृत्तौ परनिर्वाणात्मकशून्यरूपतया अवशिष्यते. अन्यत्सर्वं पूर्ववदित्यादि ज्ञेयमिति माध्यमिकाः.

(योगाचारमतम्).

तुरीये बाह्यमाभ्यन्तरं च सकलं वस्तु क्षणिकविज्ञानात्मकमेव. नातिरिक्तं वस्तु किंचिदस्ति. *(यथाहि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्ययाः विनैवबाह्येनार्थेन ग्राह्यग्राहकाकाराः भवन्ति एवं जागरितगोचरा अपि स्तंभादिप्रत्ययाः भवितुमर्हन्ति). किंच †(अनादिसन्तानान्तर्गतं पूर्वपूर्वविज्ञानमेव वासनेत्युच्यते. साचोत्तरोत्तरविज्ञाने संक्रान्ता भवति. तद्वशादेवानेकक्षणव्यवधानेपि नीलपीताद्याकारकज्ञानवैचित्र्यं भवति. यथाहि बीजवासनया कार्पासरक्तत्वं) तद्वदित्यादिवदन्ति.

*शांकरसूत्रभाष्ये अ. २. पा, २. †रामानन्दीये अ. २. पा. २.

तथाच—यथाहि प्रदीपः स्वयंप्रकाशकः प्रकाश्यश्च भवति तद्वत् ग्राह्यग्राहकोभयात्मिका बुद्धिरेकैव अनादिवासनावशादनेकाकाराऽवभासते सर्वमपि क्षणिकं क्षणिकं इत्यादिसन्तताविच्छिन्नभावनावशात् निखिलभावनोच्छेदस्सम्भवति ततश्च विगळितविविधविषयाकारं विशुद्धविज्ञानमुदेति सएवमहोदयइति मोक्षइतिच अभिधीयतइतिबोध्यं. अन्यत्सर्वं पूर्ववदित्यादि ज्ञेयमिति योगाचाराः.

अत्रेदं बोध्यं—

एषु चतुर्षु बौद्धेषु येच केचित्प्राथमिकाः तेतावत्—भगवन्तं बुद्धंप्रति सकलदुःखनिरोधः विमलविज्ञानोदयोवामुक्तिः. दुःखनिरोधमार्गस्तत्वज्ञानं. तच्च तावत् सकलमिदं दुःखं दुःखायतनं दुःखसाधनं चेत्यादिप्राचीनभावनावशात्संजायते इति परमं रहस्यं सूत्रस्यान्तंपप्रच्छुः. अतस्तेषां भगवदाज्ञयैव सौत्रान्तिकसंज्ञासंजाता.

अन्येच येच केचिद्द्वितीयास्तेतावत्-बाह्येष्वाभ्यन्तरेषु च पदार्थेषुसत्सु भगवान् बुद्धः प्राथमिकान् प्रति विज्ञेयमनुमेयमिति तृतीयान् प्रति सर्वं शून्यमिति तुरीयान्

प्रति क्षणिकं विज्ञानमेकं सदिति च कथमचीकथत्. सेयंविरुद्धाभाषेति—वर्णयामासुः. अतस्ते वैभाषिकाख्यया ख्याताः.

अपरे च ये च केचित्तृतीयास्ते तावत्—सर्वं शून्यशून्यं दुःखदुःखमित्यादिभावनावशात् निखिलवासनानिवृत्तौ परनिर्वाणं शून्यरूपं सेत्स्यतीति वयंकृतार्थाः नास्माकमुपदेश्यं किंचिदस्तीति गुरूक्तार्थं परमंगीकृत्य बाह्यमाभ्यन्तरंच जगत्सर्वं कथं वा शून्यं भवेदिति तत्वार्थाधि गमानुकूलपृच्छारूपं योगं—नचक्रुः. तथाच गुरूक्तार्थांगीकरणरूपाचारस्य करणादुत्तमाः. योगस्याकरणादधमाश्च अतस्ते माध्यमिकाइति प्रथिताः.

एके च ये च केचित्तुरीयास्ते तावत् योगस्याचारस्य च करणाद्योगाचाराइति प्रथामापुः इत्यादि.

संगृह्य प्रतिपाद्यतेच बौद्धमततत्वमित्थं—

*बौद्धानांसुगतोदेवःविश्वंचक्षणभंगुरं ।
आत्मात्मीयस्वभावाख्यः सस्यात्समुदयःपुनः ॥
क्षणिकास्सर्वसंस्कारा इति या वासना स्थिरा ।
समार्गइति विज्ञेयस्सच मोक्षोभिधीयते ॥

*सर्वदर्शनसंग्रहीयबौद्धदर्शने. विवेकविलासवचनानुवादः.

अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै ।
परितःपूजनीयानि किमन्यैरिह पूजनैः ॥
ज्ञानेन्द्रियाणि पंचैव पंच कर्मेन्द्रियाणि च ।
मनोबुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः ॥
प्रत्यक्षमनुमानं च प्रमाणद्वितयं तथा ।
चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥
अर्थोज्ञानान्वितो वैभाषिकेण बहुमन्यते ।
सौत्रान्तिकेन प्रत्यक्षाग्राह्योर्थो न बहिर्मतः ॥
आकारसहिता बुद्धिर्योगाचारस्य सम्मता ।
केवलां संविदं स्वस्थां मन्वते मध्यमाः पुनः ॥
रागादिज्ञानसन्तानवासनाच्छेदसम्भवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥
कृत्तिःकमंडलुर्मौण्ड्यं चीरंपूर्वाण्हभोजनं ।
सङ्घोरक्ताम्बरत्वं चशिश्रिये बौद्धभिक्षुभिरिति ॥

इत्यादिज्ञेयमितिबौद्धाः.

## (जैनमतम्)

आर्हतीये मते-पदार्थाद्विविधाः जीवाः अजीवाश्चेति. तत्र जीवास्तावच्चेतनालक्षणाः गजतुरगमनुजमशकादि-तत्तद्देहेषु तत्तद्देहपरिमितपरिमाणाश्च भवन्ति. ते च

जीवास्त्रिविधाः नित्यसिद्धः सांप्रतिकमुक्ताः बद्धाश्चेति. तत्र नित्यसिद्धस्तावदार्हतमुख्यो जिनइत्युच्यते. सांप्रतिकमुक्तास्तु कर्मपाशानतीत्य मुक्तिमार्गमारूढाः. बद्धास्तावत् कर्मपाशनियन्त्रितास्संसारिणः मानवादयः.

अजीवास्तावत् पुद्गलधर्माधर्माकाशकर्ममोक्षा इति षड्विधाः. तत्र पृथिव्यप्तेजोवायवइति गुणक्रियादिस्वभाववन्ति चत्वारि भूतानि स्थावरजंगमात्मकस्थूलकार्यद्वयं च पुद्गलाइत्युच्यंते.

अहिंसादिसत्कार्यप्रवृत्त्यनुमेयोधर्मः. स चाहिंसादिरूपः. ऊर्ध्वगमनशीलस्य जीवस्य देहे स्थितिहेतुरधर्मः. स तु प्राणिहिंसनरात्रिभोजनादिरूपः. यथाहि—मृत्तिकादिलेपवदलाबु जले मज्जति लेपनाशे सत्युद्गच्छति तद्वदात्मापि कर्मलेपवशाद्देहे अवतिष्ठते. लेपनाशेसत्यूर्ध्वदेशंगच्छति.

आवरणाभावआकाशः. स द्विविधः लोकाकाशः अलोकाकाशश्चेति. तत्र सर्वैस्संसारिभिरुपलभ्यमानो लोकाकाशः. मुक्तानामाश्रयस्थानमलोकाकाशः.

ज्ञानक्रियान्यतरात्मकं कर्म. तत् द्विविधं बन्धकमबन्धकं चेति.

तत्र जन्मापादकं बन्धकं. तदपि द्विविधं घातिकर्माघातिकर्म चेति. तत्र श्रेयःप्राप्तिप्रतिकूलं घाति. घातिकर्म चतुर्विधं ज्ञानावरणीयं दर्शनावरणीयं मोहनीयं आन्तरायिकं चेति. तेषु तत्वज्ञानान्नमुक्तिरिति ज्ञानं ज्ञानावरणीयं. आर्हततन्त्रश्रवणान्नमुक्तिरिति ज्ञानं दर्शनावरणीयं. बहुतीर्थकरप्रदर्शितेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयं. मोक्षमार्गप्रवृत्तिविघ्नकरमन्तरायिकं. तच्चाष्टादशविधं.

प्रतिपाद्यतेहि—

*बलभोगोपभोगाना मुभयोर्दानलाभयोः ।
अन्तरायस्तथा निद्रा भीरज्ञानं जुगुप्सितं ॥
हिंसा रत्यरती रागद्वेषौ रतिरतिस्मरः ।
शोकोमिथ्यात्वमेतेष्टादश दोषा न यस्य सः॥ इति.

तत्ववेदनानुकूलमघातिकर्म. तच्चतुर्विधं वेदनीयं नामिकं गोत्रिकमायुष्कामिति. मम वेदनीयं तत्वमस्तीत्यभिमानो वेदनीयं. एतन्नामाहमस्मीत्याभिमानो नामिकं. अहमत्रभवंतोदेशिकस्य अर्हताश्शिष्यवंशे प्रविष्टोस्मीत्यभिमानो गोत्रिकं. शरीरस्थित्यर्थं क्रियमाणस्नानभोजनकृषिवाणिज्यादिकमायुष्कं.

*सर्वदर्शन संग्रहीय आर्हतदर्शने जिनदत्तसूरिवचनानुवादः.

अबन्धकं द्विविधं संवरोनिर्जरश्चेति. तत्र विषयाभिमुखीमिन्द्रियवृत्तिं संवृणोतीति संवरो यमनियमादिः. निर्जरयति नाशयति संसारबीजभूतं कल्मषमिति निर्जरस्तप्तशिलारोहणकेशोलुंछनादिकं तपः. द्वावेतौ मोक्षसाधकौ धर्मौ.

प्रपंच्यतेहि—

*लोकातिवाहिते मार्गे चुम्बिते भास्वदंशुभिः ।
जन्तुरक्षार्थमालोक्य गतिरीर्ष्या मता सतां ॥

आपद्यतागतस्सर्वजनीनं मितभाषणं ॥ इत्यारभ्य—

ज्ञानदर्शनचारित्राण्यपवर्गस्य वर्तनी.

सरजोहरणा भैक्षभुजो लुंछितमूर्धजाः ।
श्वेताम्बराः क्षमाशीलाः निस्संगा जैनसाधवः ॥

लुंछिताः पिंछिकाहस्ताः पाणिपात्रादिगंबराः ।
ऊर्ध्वाशिनो गृहे दातुः द्वितीयास्स्युर्जिनर्षयः ॥

इत्यादयो मोक्षधर्माः—प्रतिपादिताः.

मोक्षोनाम घात्यघात्यात्मकाष्टविधकर्मपाशनाशे सति अलोकाकाशं प्रविष्टस्य सततोर्ध्वगमनं.

---

*सर्वदर्शन संग्रहीय आर्हतदर्शने, हेमचन्द्राचार्यवचनानुवादः.

तथाच अनादिसिद्धोऽर्हन्मुनिः. अन्येतु मुक्तिहेत्व- नुष्ठानान्मुच्यंते. बन्धककर्मानुष्ठानाद्बध्यंते. अधर्मा- नुष्ठानात्तिर्यगाद्यधमं जन्म प्राप्नुवंतीति वदन्ति.

किंचैवंनिरूपितः पदार्थस्सर्वोप्यस्तीति विवक्षाया- मस्ति. नास्तीति विवक्षायां नास्ति. अस्तिच नास्तिचेति- विवक्षायां अस्तिच नास्तिचेत्यादि च वदन्ति. अन्य- त्सर्वं पूर्ववदित्यादि ज्ञेयमितिजैनाः.

एवमेषां षण्णां नास्तिकमतानां पूर्वपूर्वापेक्षया प्रबु- द्धत्वादुत्तरोत्तरस्योत्कृष्टत्वं ज्ञेयमितिनास्तिकाः.

यद्यप्यत्र नास्तिकमतविचारस्य नास्त्येव साक्षात् वेदान्तोपयोगित्वं तथापि तत्तद्बोद्धृबुद्धिविकासाय तन्नि- रूपणमित्यवधेयं.

(आस्तिकमतविचारः).

अस्ति वेदप्रामाण्यमिति ब्रुवाणाः आस्तिकाः. ते ष- ड्विधाः वैशेषिकाः नैयायिकाः मीमांसकाः सांख्याः योगिनः वेदान्तिनश्चेति. तेषां शास्त्राण्येव षड्दर्शनानी- त्युच्यन्ते. प्रोच्यतेहि—

*पतंजलेर्जैमिनेश्च व्यासस्य कपिलस्यच ।
कणादस्याक्षपादस्य दर्शनानि षडेवहि ॥ इति.

---

*अभियुक्तवचनं

तत्र काणादं वैशेषिकशास्त्रं. गौतमीयं न्यायशास्त्रं. जैमिनीयं मीमांसाशास्त्रं. कापिलं सांख्यशास्त्रं. पातंजलं योगशास्त्रं. वैयासकं वेदान्तशास्त्रं.

एषु सांख्ययोगवेदान्तास्त्रयः प्रस्थानत्रयमित्युच्यन्ते. किंच सभाष्याणि गीतोपनिषच्छारीरकब्रह्मसूत्राणि च तथा व्यवह्रियन्ते. प्रस्थानंनाम तत्त्वज्ञानानुकूलमार्गप्रदर्शकोग्रन्थविशेषः. पाणिनेर्जैमिनेश्चैवेत्यपि क्वचित्कारिकापाठइतिज्ञेयं.

(वैशेषिकदर्शनं).

तत्र वैशेषिकं नाम विशेषेण तत्तत्पदार्थप्रतिपादनार्थं प्रवृत्तं शास्त्रं. विशेषाख्यपदार्थप्रतिपादकं वा. वैशेषिकीये मते— *द्रव्यगुणकर्मसामान्यविशेषसमवायाभावास्सप्त पदार्थाः. तत्र पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नव द्रव्याणि. रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारभेदाच्चतुर्विंशतिगुणाः. उत्क्षेपणापक्षेपणाकुंचनप्रसारणगमनभेदात्पञ्चकर्माणि. परमपरं चेति द्विविधं सामान्यं.

---

*तर्कसंग्रहीयवचनानि.

परं सत्ता. अपरं द्रव्यत्वादि. एतेतावद्द्रव्यगुणकर्मत्रयमात्रवृत्तिनोभवतः. नित्यद्रव्यवृत्तयोविशेषास्त्वनन्ता-एव. पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपंचकंच नित्यद्रव्याणीतिज्ञेयानि. समवायस्त्वेकएव. अभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावः अत्यन्ताभावः अन्योन्याभावश्चेति. अत्रेदंज्ञेयं—

जालसूर्यमरीचिस्थं सर्वतस्सूक्ष्मतमं यद्द्रव्यमुपलभ्यते तदेव त्र्यणुकमित्युच्यते. तदीयष्षष्ठोभागः परमाणुरित्युच्यते. तदेव जायमानसकलजगदाद्यकारणद्रव्यमित्युच्यते. सचनित्यः. परमाणुमारभ्यैव जायमानजगदुत्पत्तिः. तथाहि—

ईश्वरीयसिसृक्षावशात्परमाणुषु क्रिया जायते. परमाणुद्वयं संयुज्य द्व्यणुकं भवति. द्व्यणुकत्रयं संयुज्य त्र्यणुकं भवति. त्र्यणुकचतुष्टयं संयुज्य चतुरणुकं भवति. एवं पंचाणुकदशाणुकशताणुकसहस्राणुकादिक्रमेण कपालः भवति. कपालद्वयसंयोगेन घटोभवति. एवंक्रमेणैव महती पृथिवी महज्जलं महत्तेजः महान्वायुः तत्तच्छरीरावयवशरीरादिकं चेति सकलं जगदुत्पद्यते.

अथ ईश्वरीयसंजिहीर्षावशात् तत्तदवयवनाशे तत्तद-वयविनाशः इतिक्रमेण सकलप्रळयः.

तथाच–परमाणूनां परस्परसंयोगेन जगत्सृष्टिः. परस्परवियोगेन पुनः परमाणुरूपावस्थानं प्रळयः तौच सृष्टिप्रळयौ भगवदायत्तौ भवतः.

स च भगवानीश्वरस्तु नित्यज्ञानाद्याश्रयः एकोनित्यस्सकलजीवानुग्राहकश्च. जीवस्तु अनित्यज्ञानसुखदुःखाद्याश्रयः प्रतिशरीरं भिन्नोविभुर्नित्यश्च. द्रव्यादिसकलपदार्थतत्वज्ञानं तावत् दुःखात्यन्तोच्छेदलक्षणमोक्षसाधनं भवति.

सूत्र्यते हि—

सकलपदार्थानां *तत्वज्ञानान्निश्श्रेयसाधिगमइति.

दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गइतिच.

तानिच दुःखानि—शरीरं षडिंद्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिरिति ज्ञेयानि. तत्तत्सुकृतदुष्कृतानुरूपस्वर्गनरकनिरूपणादिकं अन्यत्सर्वं वेदान्तिवदिति वैशेषिकाः

*न्यायसूत्रे. अ. १. आन्हिकं. १.

(नैय्यायिकदर्शनं)

न्यायोनाम पर्वते वह्निरस्ति धर्मात्सुखं भवति पापाद्दुःखं भवति इत्याद्यर्थबोधनानुकूलं परार्थानुमानं. तादृशन्यायप्रपञ्चं प्रधानीकृत्य प्रवृत्तमिदं शास्त्रं न्यायशास्त्रमिति व्यपदिश्यते.

नैयायकीये मते—द्रव्यादयस्सप्तपदार्थाएव प्रमाणप्रमेयेत्यादिना षोडशधा प्रतिपादिताः आमनिक्षिप्ते घटे तेजस्संयोगवशात् पुरातनरूपरसगन्धस्पर्शनाशे सति नवीनरूपाद्यापादकतेजस्संयोगवशात् रूपादिकं जायते. नतुवैशेषिकवत्परमाणुपर्यन्तं घटेविनष्टे तेषु पीलुष्वेव तज्जायते. इत्यादि किंचिद्वैलक्षण्यं. अन्यत्सर्वं वैशेषिकवदिति गौतमीयाः

(मीमांसकदर्शनं)

मीमांसा नाम तत्तत्कर्मस्वरूपप्रतिपादकतया कर्मकाण्डाभिधस्य श्रुतिपूर्वभागस्य अर्थतत्वविचारानुकूलं शास्त्रं.

मीमांसकीये मते-सादृश्यमतिरिक्तः पदार्थः तमो दशमं द्रव्यं. प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयइति षट् प्रमाणानि. वेदानुसारेण क्रियमाणकर्मैव

अभिमतफलसाधकं भवति. तथाच तत्तत्कर्मवशादेव स्वर्गनरकादिसम्भवात्कर्मातिरिक्तः कश्चित् भोक्तुः फलदातास्तीति नांगीक्रियतइति बोध्यं.

भोक्ता नाम ज्ञानसुखदुःखाद्याश्रयश्शरीरी पुरुषः. सएव जीवइत्युच्यते. तस्य च जीवस्य हिताहितबोधने तावत् अनादिर्वेदस्स्वतएव प्रमाणं भवति. अधर्मासंकीर्णोत्कटसत्कर्मकारिणामेव दुःखलेशासम्भिन्नस्वर्गात्मकनित्यसुखप्राप्तिः. नब्रह्मादयो नेन्द्रादयोवा देवास्सन्ति शरीरिणः. किन्तु श्रुतिघटकीभूतेन्द्रादिशब्दा एव इन्द्रादिदेवताइति व्यवह्रियन्ते. सुरासुरयुद्धवज्रधारणवृत्रहननवरप्रदानादिशरीरिव्यापारावबोधकानां श्रुतिभागानां अर्थवादरूपत्वमित्यादिज्ञेयं. अन्यत्सर्वं वेदान्तिवदिति मीमांसकाः.

(सांख्यदर्शनं).

सांख्यं नाम संख्यायन्ते परिगण्यन्ते तत्तत्त्वात्मकपदार्थाः अनेनेति तादृशं शास्त्रं.

सांख्यीये मते—जडः अजडश्चेति द्वौ पदार्थौ. तत्र जडस्तावत् प्रकृतिः महत्तत्त्वं अहंकारः एकादशेन्द्रियाणि पञ्चतन्मात्राणि पञ्चमहाभूतानि चेति

चतुर्विंशतितत्त्वात्मकोभवति. अजडः पुरुषः. सएव पंचविंशतत्त्वात्मकइति ज्ञेयं.

तत्रप्रकृतिस्त्रिगुणसाम्यावस्थात्मिका सकलजगदाद्यावस्थारूपा स्वयमनादिश्च भवति सैव मूलप्रकृतिः प्रधानमव्यक्तमजेत्यादिशब्दैर्व्यवह्रियते. सा च जडात्मिकापि पुरुषार्थसिद्धये स्वभावेनैव सकलजगद्रूपेण परिणममाना भवति. यथाहि गोभुक्ततृणमचेतनं स्वभावेनैव लोकोपकाराय दुग्धदधिनवनीतसर्पिरादिरूपेण परिणमते यथावा जलमचेतनं स्वभावेनैव तरंगबुद्बुदफेनहिमकरकादिरूपेण बहुधा भवति तद्वदिति बोध्यं.

सेयं प्रकृतिः सकलजगदुत्पादनप्रथमकारणत्वात् स्वोत्पादककारणान्तराभावाच्च केवला प्रकृतिरित्युच्यते.

महत्तत्त्वाहंकारपंचतन्मात्राणि सप्त उत्तरोत्तरोत्पादकत्वात्प्रकृतिरूपाणि पूर्वपूर्वजन्यत्वाद्विकृतिरूपाणि चेति प्रकृतिविकृतिशब्देन प्रतिपाद्यन्ते.

पंचज्ञानेन्द्रियपंचकर्मेन्द्रियमनोरूपैकादशेन्द्रियाणि पंचमहाभूतानि चेत्येतानि षोडश अहंकारपंचतन्मात्रजन्यत्वात् विजातीयतत्त्वान्तरानुत्पादकत्वाच्च केवलविकृतयइति व्यपदिश्यन्ते.

पुरुषस्तु चेतनात्मकः प्रकृतिविकृतिविलक्षणोभवति. प्रतिपाद्यतेहि तदेतत्सर्व—

*मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकश्च विकारो न प्रकृतिर्नविकृतिः पुरुषः ॥ इति.

सचपुरुषः पुष्करपलाशवन्निर्लिप्तोपि प्रकृतिसन्निधानमात्रादेव तदीयगुणपरिपाकरूपान् सुखदुःखाद्यन्तःकरणधर्माननुभवन्निव भवति. यथाहि-विनिर्मलतरस्फटिकमणिर्जपाकुसुमसन्निधानमात्रादेव लोहितायते तद्वदिति ज्ञेयं.

गीयतेहि—

†प्रकृतेःक्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ इति.

एवमुदासीनतया स्वाभाविककर्तृत्वादिव्यापाररहितस्यापि पुरुषस्य सन्निधानमात्रादेव सापि प्रकृतिःसकलप्रपंचप्रकाशनकर्त्रीभवति. ‡(यथा निर्व्यापारस्याप्ययस्कान्तस्य सन्निधानेन लोहस्य व्यापारः तथा निर्व्यापारस्य पुरुषस्य सन्निधानेन प्रधानस्य व्यापारो युज्यते) इतिज्ञेयं.

---

*सांख्यसप्तत्यां. †गीतायां अ, ३. ‡सर्वदर्शनसंग्रहीयसांख्यदर्शने.

स्थावरतिर्यग्देवमानुषाणां सृष्टिर्वैकृतीसृष्टिः. तदेतत्सर्वमुपपादयामः. तथाहि—

(प्राकृतसृष्टिः).

सा च भागवती शक्तिर्द्विविधा चिच्छक्तिर्जडशक्तिश्चेति.

तत्रचिच्छक्तिश्चेतनारूपा. जडशक्तिर्जडात्मिका भवति. यथाचायस्कान्तगता ऽ यश्चालनशक्तिः अयस्कान्तात्मिकैव नातिरिक्ता तथा भगवच्चिच्छक्तिरपि भगवदात्मिकैव नातिरिक्तेति ज्ञेयं.

सैवात्मचैतन्यरूपा चिच्छक्तिः परमपदपरब्रह्मपरतत्वादिपदैः श्रीर्विद्यादेवीत्यादिशब्दैश्च श्रूयमाणा सकलैर्द्विजैः कालेकाले दैवीगायत्रीत्यनुसन्दधानैः देवस्य सवितुर्वरेण्यं तद्भर्गोधीमहीति सकलधीप्रकाशकस्य तस्य भगवतस्सर्वान्तर्यामितेजोरूपेणोपास्यते. न तु दृश्यमानजडात्मकसूर्यबिम्बस्यातपादिमात्रं. इति ज्ञेयं.

जडात्मिका तु द्वितीया शक्तिस्त्रिगुणात्मिका भवति. सैषा शक्तिः प्रकृतिर्मूलप्रकृतिर्मायाप्रधानमव्यक्तमाकाशमक्षरमविद्या विमर्शोजडमज्ञानमजा तपस्तमइत्यादिशब्दैर्व्यवह्रियते. सैषा शक्तिस्सकलजगदाद्यावस्थारूपेति ज्ञेया.

किंच—सेयं शक्तिर्नब्रह्मात्मिका भवति. नापि श-शशृङ्गायते. किन्तु तदुभयविलक्षणा भवति.

तथाहि—सपरमात्मा निर्गुणः सातु गुणमयी. स ज्ञानरूपस्सा जडरूपा. सस्वयमपरिणामी सापरिणामिनी. इत्यादिनाब्रह्मविलक्षणा भवति.

शशाशृङ्गादिकन्तु कुत्रापि सुतरामविद्यमानं इयन्तु जगद्रूपेण दृश्यमानेति तद्विलक्षणा च. एवं तदुभयविलक्षणा भवति.

तथाच—वेदान्तिमते आत्मा अनात्मा चेति द्वौ पदार्थौ. तावेव तत्रतत्र चेतनाचेतनौ दृग्दृश्यौ भोक्तृभोग्यौ तत्त्वातत्त्वे चिदचितौ स्वतन्त्रास्वतन्त्रौ पुरुषः प्रकृतिश्चेत्यादिशब्दैर्व्यवह्रियते.

सैषा प्रकृत्यात्मिका शक्तिः भगवदधीनीभूय सकलजगद्व्यापारनिर्वाहिका भवति. तादृशशक्तियुक्तः परमात्मापि प्रभायुक्तस्सूर्यः प्रकाशकतामिव सकलजगज्जन्मादिकारणतामभिप्रपद्यमानस्सन् (*एषसर्वेश्वरएषसर्वज्ञएषोन्तर्याम्येषयोनिस्सर्वस्य प्रभवाप्ययौ हि भूतानां) इति संस्तूयते

---

*मांडूक्योपनिषत्.

श्रूयतेहि—

*तस्माद्वा एतस्मादात्मनआकाशस्सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवीति.

एतानि वाय्वादिचत्वारि सूक्ष्मभूतान्येव तार्किकैः परमाणवइति पीलवइति च प्रोच्यन्ते.

तेषां सूक्ष्मभूतानां प्रत्येकं स्वस्वसत्वांशैः क्रमात् श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पंचज्ञानेन्द्रियाणि जायन्ते. तेषामेव सूक्ष्मभूतानां परस्परं मिळितैस्सत्वांशैरन्तःकरणमेकं जायते. तच्चमनोबुद्धिचित्ताहंकाराइति वृत्तिभेदात् चतुर्धाभवति. अथ तेषामेव भूतानां स्वस्वरजोंशैः क्रमात् वाक्पादपाणिपायूपस्थाख्यानि पंच कर्मेन्द्रियाणि जायन्ते. तेषामेव सूक्ष्मभूतानां परस्परं मिळितैरजोंशैः प्राणस्संजायते. स च तत्तस्थानभेदात् प्राणापानव्यानोदानसमानाइति पंच संज्ञाः लभते.

पठ्यतेहि तदेतत्सर्वं—

†पंचभूतस्थसत्वांशैः श्रोत्रादीनां समुद्भवः ।
ज्ञानेन्द्रियाणां राजेन्द्रप्रत्येकं)मिळितैस्तु तैः ॥
अन्तःकरणमेकं स्याद्वृत्तिभेदाच्चतुर्विधं ।

*तैत्तरीये, आनन्दवल्ल्यां. अनु. १.

†देवीभागवते. स्कं. ७. अ. ३२.

यदा तु संकल्पविकल्पकृत्यं तदा भवेत्तन्मनइत्यभिख्यं।
स्याद्बुद्धिसंज्ञं च यदा प्रवेत्ति सुनिश्चितं संशयहीनरूपं॥
अनुसंधानमात्रं तच्चित्तं च परिकीर्तितं ।
अहंकृत्यात्मवृत्त्या तु तदहंकारतां गतं ॥
तेषां रजोंशैर्जातानि क्रमात्कर्मेंद्रियाणितु ।
प्रत्येकं) मिळितैस्तैस्तुप्राणोभवति पंचधा ॥ इत्यादि.

अस्मिन् सृष्टिक्रमे—त्रिगुणात्मकादहंकारतत्त्वादेव इन्द्रियाणां तन्मात्राणांचोत्पत्तिरित्यादिच तत्र तत्र प्रतिपादितमितिज्ञेयं.

एतानि पंचज्ञानेन्द्रियाणि पंचकर्मेन्द्रियाणि पंचप्राणाः मनोबुद्धिश्चेतिसप्तदशानां समुदायः सूक्ष्मशरीरमिति लिंगशरीरमिति च प्रोच्यते.

प्रतिपाद्यते हि—

*पंचप्राणमनोबुद्धिदशेन्द्रियसमन्वितं ।
अपंचीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनं ॥ इति.

इदमेवपरकायप्रवेशलोकान्तरयात्राद्यनुकूलं शरीरं.

अथच भगवदिच्छया तान्येव सूक्ष्मभूतानि पंचीकरणविधया परस्परं मिळित्वा महाभूतरूपेण परिणमन्ते. तथाहि—

---

*आत्मबोधे.

एवं सभगवान् संकल्पमात्रादेव सूक्ष्मभूतानि सृष्ट्वा एकैकं भूतं द्विधा कृत्वा द्वयोर्भागयोरेकं भागं चतुर्धा विभज्य चतुर्षु भूतार्धभागेषु योजयति. एवंसर्वेषु क्रियमाणेषु एकैकस्य भूतस्य अर्धं स्वभागः अर्धान्तरन्तु चतुर्णां स्वेतरभूतानां भागसमुच्चयोभवति. तथाच स्वभागस्य भूयस्त्वात् परभागस्याल्पीयस्त्वाच्च पृथिव्यादिव्यपदेशोभवति. एवंक्रमेण पृथिव्यादिपंचमहाभूतानि सम्भवन्ति. तेभ्यः पञ्चमहाभूतेभ्यएव चतुर्दशभुवनपरिमण्डितब्रह्माण्डकटाहस्संजायते. तदेव स्थूलशरीरमित्युच्यते. तादृशब्रह्माण्डकटाहात्मकस्थूलशरीरस्य अधिष्ठानात्मा परमात्मा विराडिति प्रतिपाद्यते.

श्रूयतेहि तदीयं स्वरूपं—

*सहस्रशीर्षापुरुषस्सहस्राक्षस्सहस्रपात् इत्यादि.

एवं—नमोस्त्वनन्तायसहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे। सहस्रनाम्ने पुरुषाय शासते सहस्रकोटियुगधारिणे नमः इत्यादि च.

अत्रेदं ज्ञेयं—

सएषः अपरिमितानन्तविचित्रमायाशक्तियुक्तः परमात्मा तावत् स्वीयां राजसीं प्रकृतिमालम्ब्य चतुर्मुखरूपेण चराचरात्मकस्थूलजगत्सृष्टिमारभमाणस्सन् शारदा—

*ऋग्वेदे अष्टकं. ८. अ. ४. व. १६.

नकसनंन्दनादिभिस्संसेव्यमानः ब्रह्मात्मभूस्सुरज्येष्ठः रमेष्ठी पितामहः इत्यादिशब्दैः व्यवह्रियमाणश्च भूत्वा कलं जगत्प्रकाशयति.

किंच स विशुद्धविज्ञानात्मा परमात्मैव स्वकीयां गात्त्विकीं प्रकृतिमालम्ब्य विष्णुरूपेण चराचरात्मक-सकलजगद्रक्षणोन्मुखस्सन् श्रीभूनीळानन्तगरुडविष्व-क्सेनादिपरिवारपरिवृतः शंखचक्रादिसाधनसमन्वित-स्सन् विष्णुर्नारायणः कृष्णोवैकुण्ठोविष्टरश्रवाः इत्या-दिशब्दैर्व्यवह्रियमाणश्च भूत्वा सकलंजगदनुगृण्हाति.

अथच सएव परमात्मा स्वीयां तामसीं प्रकृतिमा-श्रित्य रुद्ररूपेण सकलजगद्विनाशनोन्मुखस्सन् गिरिजा-गजमुखवीरभद्रादिभिः भृंग्यादिभिश्च गणैस्संसेवितः शम्भुरीशः पशुपतिश्शिवश्शूली महेश्वरइत्यादिशब्दैः व्यवह्रियमाणश्च भूत्वा सकलं जगदात्मन्येव विलीनयति.

अत्रेदं बोध्यं—

ब्रह्मविष्णुशिवरूपेणेत्यत्र तत्तत्स्वरूपेणेत्येके वदन्ति. अन्येतु—विष्णुरूपेणेत्यत्र तत्स्वरूपेणेति ब्रह्मशिवरूपेणे-त्यत्रतु तत्तदन्तर्यामिरूपेणेतिच—वदन्ति. इति.

पठ्यतेहि त्रिमूर्तिस्वरूपतत्वं—

*जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरोहरिः ।
ब्रह्मा भूत्वास्य जगतोविसृष्टौ सम्प्रवर्तते ॥
सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना ।
सत्त्वभृद्भगवान्विष्णुरप्रमेयपराक्रमः ॥
तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः ।
मैत्रेयाखिलभूतानि भक्षयत्यतिभीषणः ॥
स्तम्भयित्वाऽशु भूतानि जगत्येकार्णवीकृते ।
नागपर्यङ्कशयने शेतेऽसौ परमेश्वरः ॥
प्रबुद्धश्च पुनस्सृष्टिं करोति ब्रह्मरूपधृत् ।
सृष्टिस्थित्यन्तकरणात् ब्रह्मविष्णुशिवात्मिकां ।
स संज्ञां याति भगवानेकएव जनार्दनः ॥

इत्यादि ज्ञेयं. इति प्राकृत सृष्टिः.

(वैकृतसृष्टिः).

सैवत्रिगुणात्मिका प्रकृतिः सत्त्वोपसर्जनरजः सत्त्वोपसर्जनतमः रजउपसर्जनसत्त्वं रजउपसर्जनतमः तमउपसर्जनसत्त्वं तमउपसर्जनरजः इत्यादिभेदेन बहुधा भवति. यथाहि द्विचत्वारिंशदक्षरात्मिका पङ्क्तिः जातजायमानजनिष्यमाणानुपूर्वीरूपेण बहुधा भवति

*विष्णुपुराणे अंशः. १. अध्यायः. २.

तद्वदिति ज्ञेयं. सेयं गुणमयी मायाशक्तिरेव जीवस्य शरीरसंयोगवियोगात्मकजननमरणरूपान् संसारबन्धानातनोति.

तत्र जीवोनाम स्वयंसच्चिदानन्दस्वरूपः सदसत्कर्माविद्यावशादल्पप्रकाशश्च शरीरी. सएव क्षेत्रज्ञआत्मा पुरुषइत्यादिशब्दैर्व्यवह्रियते.

तथाच—स्थावरादिहिरण्यगर्भान्ताः सर्वेप्यात्मानः क्षेत्रज्ञाइत्युच्यमानाः स्वस्वशक्त्यनुरूपं अधिकारस्वातन्त्र्यादिकमापद्यन्ते. तत्र चतुर्मुखस्सकललोकसर्जनैकप्रवृत्तोभवति. स भगवान् चतुर्मुखः परमेश्वरप्रकाशितवेदानुसारेण समालोच्य तान्येव पंचभूतानि प्रकारान्तरेण योजयन् भावनामात्रादेव स्थूलशरीराणिकल्पयन् क्रमेण स्थावरतिर्यग्देवमानवान् सृष्ट्वा तत्तत्कर्मानुरूपभोग्यभोगोपकरणान्वितानि तत्तत्स्थानानि तत्तल्लोकान् तत्तल्लोकाधिपतिपदानिचेति सकलं जगत्सृजति.

यथाहि कश्चिच्छिल्पी केनचिद्गृहपतिना समुपदिष्टः तत्संपादितान्येव शिलादारुलोहलोष्टेष्टकादीनि संगृह्य स्तम्भ दारु कवाट वलभि प्रासाद प्राकारादिरूपमापादयन् गृहं निर्माति तद्वदिति ज्ञेयं.

कृत्रिमं च तथादुर्गं पुरं *खर्वटकादिकं ।
गृहाणि च यथान्यायं तेषु चक्रुः पुरादिषु ॥
शीतातपादिबाधानां प्रशमाय महामुने ॥
प्रतीकारमिमं कृत्वा शीतादेस्ताःप्रजाः पुनः ।
वार्तोपायं ततश्चक्रुः हस्तसिद्धिं च कर्मजां ॥
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।
प्रियंगवोह्युदाराश्च कोरदूषास्सतीनकाः ॥
माषा मुद्गा मसूराश्च निष्पावास्तु कुळुत्थकाः ।
आढक्यश्चणकाश्चैव शणास्सप्तदश स्मृताः ॥
परापरविदः प्राज्ञास्ततोयज्ञान्वितन्वते ।
येषां तु काळपृष्टोसौ पापबन्धुर्महामुने ॥
चेतस्सु ववृधे चक्रुस्ते न यज्ञेषु मानसं ।
प्रवृत्तिमार्गव्युच्छित्तिकारिणोवेदनिन्दकाः ॥
दुरात्मानोदुराचाराः बभूवुः कुटिलाशयाः ।
संसिद्धायान्तु वार्तायां प्रजास्सृष्ट्वा प्रजापतिः॥
मर्यादां स्थापयामास यथास्थानं यथागुणं ।
वर्णानामाश्रमाणां च धर्मान् धर्मभृतां वर ॥

---

*नगरग्रामयोर्मध्यगतं नदीगिरिसमाश्रितंस्थानं खर्वटकं.

लोकांश्च सर्ववर्णानां सम्यग्धर्मानुवर्तिनां ।

प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावतां ॥

स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वनिवर्तिनां ।

वैश्यानां मारुतं स्थानं स्वधर्मनिरतात्मनां ॥

गान्धर्वं शूद्रजातीनां परिचर्यानुवर्तिनां ।

प्राजापत्यं गृहस्थानां ब्राह्मं सन्यासिनां स्मृतं ॥

योगिनाममृतं स्थानं तद्विष्णोः परमं पदं । किंच—

तामिस्रमन्धतामिस्रं महारौरवरौरवौ ॥

असिपत्रवनं घोरं कालसूत्रमवीचिमत् ।

विनिन्दकानां वेदस्य यज्ञव्यासेधकारिणां ॥

स्थानमेतत्सदाऽऽख्यातं स्वधर्मत्यागिनश्च ये ।

इत्यादि ज्ञेयं.

तथाच येच येच जीवाः स्वस्वकर्मानुसारेण यादृशं यादृशं शरीरमाविशन्ति तेते तत्तच्छरीरानुरूपसुखदुःखादिकमनुभवन्ति. तत्र मानुषशरीरकृतानामेव कर्मणां सदसत्फलदातृत्वशक्तिस्सम्भवति. नेतरशरीरकृतानामितिज्ञेयं.

तत्र शरीरं नाम जीवात्मनस्सुखदुःखाद्यनुभवसाधनीभूतं भूतेन्द्रियादिसमष्टिरूपं द्रव्यं. तदेव क्षेत्रमित्यपि प्रतिपाद्यते.

गीयते हि—

*महाभूतान्यहंकारोबुद्धिरव्यक्तमेवच ।

इन्द्रियाणि दशैकंच पंच चेन्द्रियगोचराः ॥

इच्छा द्वेषस्सुखं दुःखं संघातश्चेतना धृतिः ।

एतत् क्षेत्रं समासेन सविकारमुदाहृतं॥ इति.

तच्च शरीरं चतुर्विधं जरायुजमंडजं स्वेदजमुद्भिज्जं चेति. तत्र जरायोर्गर्भावरकचर्मविशेषाज्जातं जरायुजं मनुष्यपश्वादीनां शरीरं. अण्डाज्जातमण्डजं पक्षिपन्नगादीनां शरीरं. स्वेदाज्जातं स्वेदजं यूकमशकादीनां शरीरं. भूमिमुद्भिद्य जातमुद्भिज्जं तरुगुल्मादीनां शरीरं.

एषु केषांचित् स्थावरतिर्यगादीनां करचरणादितत्तदवयवराहित्यप्रतिभाशक्तिराहित्यादिकमपि दृश्यते तच्च सर्वं तत्तत्कर्मनिमित्तकमेवेति ज्ञेयं.

तथाच सकलजगदधीश्वरस्सपरमात्मा स्वयमेकएव तत्तच्छरीराण्यधिष्टाय तत्तद्भोग्यभोगोपकरणानि संप्रकल्पयन् तत्तत्कारणरूपेण तानितानि भूतानि उत्पादयन्नभिवर्धयन्नपहरंश्च भूत्वा सकलजगदात्मकइति जेगीयते.

---

*गीतायां अ, १३.

श्रूयते हि—

*सएषब्रह्मा एषइन्द्रः एषप्रजापतिः एतेसर्वेदेवाः इमानिपंचमहाभूतानि पृथिवीवायुराकाशआपोज्योतींषीत्येतानि इमानिच क्षुद्रमिश्राणीवबीजानि इतराणिच अण्डजानिच जारुजानिच स्वेदजानिचोद्भिज्जानिच अश्वा गावः पुरुषा हस्तिनो यत्किंचेदंप्राणि जंगमंच पतत्रिच यच्चस्थावरं सर्वंतत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रोलोकः प्रज्ञाप्रतिष्ठा प्रज्ञानं ब्रह्म इति.

एवं—†सतपस्तप्त्वा इदग्ंसर्वमसृजत यदिदंकिंच तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवदित्यादिच.

गीयते च भगवता—

‡भूमिरापोनलोवायुः खं मनोबुद्धिरेव च ।
अहंकारइतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयं इतस्त्वन्यांप्रकृतिंविद्धि मे परां ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्यजगतः प्रभवः प्रळयस्तथा ॥

---

*ऐतरेये. अ. ३. †तैत्तरीये. आनन्दवल्ल्यां अनु. ६.

‡गीतायां अध्यायः. ७.

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयिसर्वमिदं प्रोतं सूत्रे मणिगणाइव ॥ इति.

पठ्यते च—

*चतुर्विभागस्संसृष्टौ चतुर्धा संस्थितास्स्थितौ ।
प्रळयंच करोत्यन्ते चतुर्भेदोजनार्दनः ॥

ब्रह्मा दक्षादयः कालः तथैवाखिलजन्तवः ।
विभूतयोहरेरेते जगतस्सृष्टिहेतवः ॥

विष्णुर्मन्वादयःकालः सर्वभूतानिच द्विज ।
स्थितेर्निमित्तभूतस्य विष्णोरेते विभूतयः ॥

रुद्रः कालान्तकाद्याश्च समस्ताश्चैवजन्तवः ।
चतुर्धा प्रळयायैते जनार्दनविभूतयः ॥ इत्यादि.

तथाच—यथाहि लोके मधुररसाभिव्याप्तगुडविकाररूपमखिलमपि वस्तु मधुरमित्येव परिज्ञायते एवमेव ब्रह्मचैतन्याधिष्ठितप्रकृतिपरिणामरूपं जगत् सर्वंखल्विदं ब्रह्मेति ज्ञेयं. इतिसृष्टिनिरूपणं.

---

*विष्णुपुराणे अ. १. अ. २२.

# प्रळयप्रकरणं.

प्रलयोनाम प्रकर्षेणलयःप्रलयइतिव्युत्पत्तया जगद्वि-नाशः.

स च प्रळयश्चतुर्विधः नित्यः नैमित्तिकः प्राकृतिकः आत्यन्तिकश्चेति. तत्र प्रतिदिनमिह दृश्यमानमर्त्यप-शुपक्षिकीटादिप्राणिनां सुषुप्तिरूपोनित्यःप्रळयः.

ब्रह्मणोह्नि येच चतुर्दशमनवः सप्तर्षयश्शक्रादयश्च स्वस्वानुरूपस्थानेषु विद्यमानाः भवेयुः चतुर्मुखदि-वसावसाने तेषां सर्वेषां सपरिवाराणां दिव्यानां मर्त्या-दीनां च विनाशो नैमित्तिकःप्रळयः. अयमेव अवा-न्तरप्रळयइति दैनन्दिनप्रळयइतिच प्रोच्यते. तदानीं सर्वेपि समुद्रास्स्वयमेकीभूय त्रिलोकीमात्मसात्कुर्वन्ति. तत्र महाजलमध्ये स परमेष्ठिरूपःपरमात्मा शेषशायी-भूय योगनिद्रामातन्वानः सर्वैस्सत्यलोकलोकैस्संस्तूयते. ते च सुरासुरमानवादयःप्राणिनः सर्गान्तरबीजभूतस्व-स्वकर्मवासनाभिस्सह तदुदरमाविशन्ति.

तथाच यथाहि लोके कश्चित्पुमान् प्रतिदिनं प्रत्यूष-मारभ्य तत्तत्कार्येषुप्रवर्तमानः शर्वरीं सुखमधिशेते तदा-नीं तदीयज्ञानेच्छाक्रियात्मकास्सर्वेपिव्यापाराः तस्मि-

न्नेव प्रलीनाभवन्तिं तद्वदेव अहःकल्पकाले सकलं प्रकाश्य विरतव्यापारे परमात्मन्न्येव चेत्तनाचेतनात्मकं सकलं त्रैलोक्यं रात्रिकल्पकाले विलीयतइति ज्ञेयं.

अत्रेदंबोध्यं—

कालश्चकलाकाष्ठामुहूर्तयामाहोरात्रपक्षमासायनवत्सरयुगकल्पादिरूपः.

तत्र मनुष्यमानेन मासः पितॄणां दिनं. अमावास्या तेषां मध्यान्हं. पूर्णिमा निशीधः. मनुष्यमानेन संवत्सरोदेवानां दिनं. उत्तरायणं तेषामहः. दक्षिणायनं रात्रिः. तेनदेवमानेन द्वादशसहस्रवर्षात्मकः कालः दैवंयुगमित्युच्यते. तदेव मनुष्याणां चतुर्युगं भवति.

तत्र मनुष्यमानेन अष्टाविंशतिसहस्राधिकसप्तदशलक्षवर्षपरिमितं कृतयुगं. षण्णवतिसहस्राधिकद्वादशलक्षवर्षपरिमितं त्रेतायुगं. चतुष्षष्टिसहस्राधिकाष्टलक्षवर्षपरिमितं द्वापरयुगं. द्वात्रिंशत्सहस्राधिकचतुर्लक्षवर्षपरिमितं कलियुगं. एषां चतुर्णामपि युगानां सहस्रावृत्तौ द्वात्रिंशत्कोट्युत्तरचतुश्शतकोटिनृवर्षात्मकः कालः चतुर्मुखस्यैकं दिनं भवति. तस्य रात्रिरपि तावती ज्ञेया. तदेवब्राह्मंअहः मनुष्याणां सृष्टिकल्पइत्युच्यते.

सैवब्राह्मीरात्रिः क्षयकल्पइत्युच्यते. एवमेव क्रमेण तस्य चतुर्मुखस्य माससंवत्सरादिकमपि ज्ञेयं. इति.

ब्रह्मणश्शतायुःपरिमाणात्मके महाकल्परूपे मनुष्यवर्षैः चतुरर्बुदाधिकैककखर्वोत्तरैकमहाखर्वोपस्कृतपद्मत्रयात्मके(३११०४०००००००००००)काले मूलप्रकृतिपर्यन्तसकलप्रपञ्चनाशः प्राकृतिकःप्रळयः. सएव महाप्रळयइतिच प्रोच्यते. तदानीं भगवान् चतुर्मुखः स्वसन्निहितैः परिवारैस्सह अप्राकृतं परमपदमनुप्रविशति.

सूत्र्यतेहि भगवता बादरायणेन—

*यावदधिकारमवस्थितिराधिकारिकाणामिति.

तथाच—येच साधवस्स्वकृतसुकृतविशेषैरूर्ध्वमूर्ध्वमारूढाः संसारसागरतरणतरणौ भगवति न्यस्तात्मानो ब्रह्मलोकमधिवसन्ति तेपिमहाभाग्यशालिनः कार्यात्यये तदध्यक्षेण ब्रह्मणा सह मुक्ता भवन्ति.

स्मर्यतेहि—

†ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदं ॥ इति.

---

*ब्रह्मसूत्रे अ. ४. पा. ४.

†शांकरब्रह्मसूत्रभाष्ये अ. ४. पा. ४. उदाहृतेयं स्मृतिः.

इयमेव क्रममुक्तिरित्युच्यते.

पठ्यतंहि प्राकृतप्रळयप्रकारः—

*जगत्प्रतिष्ठादेवर्षे पृथिव्यप्सुप्रलीयते ।
तेजस्यापःप्रलीयन्ते तेजोवायौप्रलीयते ॥
वायुश्चलीयतेव्योम्नि तच्चाव्यक्ते प्रलीयते ।
अव्यक्तंपुरुषेब्रह्मन् निष्कळे संप्रलीयते ॥ इति.

गीयतेच—

†सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकां ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहं॥ इति.

तथाच—स परमेश्वरः पुनःपुनस्स्वीयांशक्तिं एवमेव प्रसारयन्नन्तरयंश्च सृष्टिस्थितिलयव्यापारैर्निरन्तरं चिक्रीडति चिरन्तनःपुमानिति ज्ञेयं.

योगिनां तत्वसाक्षात्काराज्जायमानः परमात्मनिलयः आत्यन्तिकःप्रळयः. अयमात्यन्तिकप्रळयप्रकारः सर्वोपि निर्विकल्पकसमाधिनिरूपणावसरे व्यक्तीभविष्यति.

इतिप्रळयनिरूपणं.

इत्यादि ज्ञेयं इतिवेदान्तिनः.

---

*विष्णुपुराणवचनं वे. परिभाषायामुदाहृतं.

†गीतायां अ. ९.

एवं तत्तच्छास्त्राणि विचारयतःपुरुषस्य मननव्युत्पत्त्यां सत्यां—

अनन्तशास्त्रं बहु वेदितव्यं अल्पश्च कालोबहवोहि विघ्नाः।

यत्सारभूतं तदुपासितव्यं हंसोयथा क्षीरमिवाम्बुमिश्रं॥

इत्यालोच्य मुमुक्षुणा निदिध्यासनात्मकयोगाभ्यासे मनः प्रवर्तयितव्यं.



## योगप्रकरण.

तत्रयोगश्चित्तवृत्तिनिरोधः. अभ्यासवैराग्याभ्यां तन्निरोधः. तत्र विषयदोषदर्शनजेन वैराग्येण तद्वैमुख्यमुत्पाद्यते अभ्यासेन च दृढं स्थैर्यमुत्पद्यतइति आभ्यां भवति चित्तवृत्तिनिरोधः.

गीयतेहि—

*असंशयं महाबाहो मनोदुर्निग्रहं चलं।

अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥ इति.

*गीतायां अ. ५.

तादृशस्य योगस्य सुलभसाधनोपायान्तरभूतानि यम-नियमासन प्राणायाम प्रत्याहार धारणाध्यानसमाधयश्चेति अष्टावंगानि.

तेष्वहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमः. तत्र प्राणवियोगप्रयोजनव्यापारः हिंसा. सा च सर्वानर्थहेतुः तदभावः अहिंसा. सत्यं वाङ्मनसयोर्यथार्थत्वं. स्तेयं परस्वापहरणं तदभावोऽस्तेयं. ब्रह्मचर्यं स्मरविकार-निरोधः. अपरिग्रहश्शरीरयात्रासाधनातिरिक्तभोगसाधना-नामस्वीकरणं. तएतेऽहिंसादयः पंच यमशब्दवाच्याः योगांगत्वेननिर्दिष्टाः.

शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमः. तत्र शौचं द्विविधं बाह्यमाभ्यन्तरंच. बाह्यं मृज्जलादिभिः कायप्रक्षाळनं. आभ्यन्तरं मैत्र्यादिभिश्चित्तमलप्रक्षाळनं. तत्र पुण्यकृत्सुमैत्री दुःखिषुकरुणा सुखिषुमुदिता पापि-षूपेक्षाचेति चतस्रश्चित्तवृत्तयः चित्तनैर्मल्यापादकतया मनःप्रसादनानीत्युच्यन्ते.

सन्तोषस्तुष्टिः. तपश्शास्त्रान्तरोपदिष्टं कृच्छ्रचान्द्राय-णादि. स्वाध्यायः प्रणवपूर्वाणां मन्त्राणां जपः. ईश्व-रप्रणिधानं तस्मिन्परमात्मनि सर्वक्रियाणां फलनिरपे-

ातया समर्पणं. एषु तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोगइति व्यवह्रियन्ते.

एषां यमनियमानां प्रतिपक्षभूताः हिंसनासत्यस्तेया- ायोलोभक्रोधादिवशाद्यत्किंचित्कृताः कारितास्अनुमोदि- ावा दुःखाज्ञानाद्यनन्तफलदाभवेयुः इत्यालोच्य ते परि- र्तव्याः. ततस्तत्परिपन्थ्यहिंसादयः प्ररूढास्सन्तः पर- ात्मनः ध्यानानुकूलं चित्तनैर्मल्यमुपजनयन्तीति ज्ञेयं. अपरंच—

यत्सन्निधाने अहिनकुलादयः शाश्वतिकवैरादिराज- नतामसविकारान् विहाय सात्त्विकमार्गे प्रवृत्ता भवेयुः ास्य अहिंसासिद्धिर्जातेति ज्ञेयं.

आस्यते अनेनेत्यासनं पद्मासनवीरासनस्वस्तिका- ानभद्रासनादिकं.

ूयतेहि तत्तदासनलक्षणं—

*ऊर्वोरुपरि वै धत्ते सदा पादतले उभे ।
पद्मासनं भवेदेतत् सर्वव्याधिविषापहं ॥

एकं चरणमन्यस्मिन्नूरावारोप्य निश्चलः ।
आस्तेयदिदमेनोघ्नं वीरासनमुदीरितं ॥

---

*त्रिशिखिब्राह्मणोपनिषदि अ. १.

तत्र नाड्यस्समुत्पन्नास्तिर्यगूर्ध्वमधोमुखाः ॥

तन्नाभिचक्रमित्युक्तं कुक्कुटाण्डमिवस्थितं ।
गान्धारी हस्तिजिह्वा च तस्मान्नेत्रद्वयं गते ॥

पूषा चालम्बुसा चैव श्रोत्रद्वयमुपागते ।
शूरानाम महानाडी तस्माद्भ्रूमध्यमाश्रिता ॥

विश्वोदरीतु या नाडी सा भुङ्क्तेन्नं चतुर्विधं ।
सरस्वती तु या नाडी पीत्वा तु सलिलं क्षणात् ॥

क्षुतमुत्पादयेद्घ्राणे श्लेष्माणं सञ्चिनोति च ।
कण्ठकूपोद्भवा नाडी शङ्खिन्याख्या अधोमुखी ॥

अन्नसारं समादाय मूर्ध्नि सञ्चिनुते सदा ।
नाभेरधोगतास्तिस्रोनाडयस्स्युरधोमुखाः ॥

मलं त्यजेत्कुहूर्नाडी मूत्रं मुञ्चति वारुणी ।
चित्राख्या सीविनी नाडी शुक्रमोचनकारिणी ॥ इति.

एवमपरंच तत्रैवश्रूयते—

*(कटेरधःप्रदेशस्थं) मूलाधारत्रिकोणकं ।
तदेतत्कामकूटाख्यं पीठं कामफलप्रदं ॥

स्वाधिष्ठानाह्वयंचक्रं *(जघनाधः) षडश्रकं ।
नाभिदेशेस्थितं चक्रं दशारं मणिपूरकं ॥

---

*( ) एतच्चिन्हमध्यगतं आनुपूर्वीद्वयं विक्षिप्तं.

द्वादशारं महाचक्रं हृदयेचाप्यनाहतं ।
तदेतत्पूर्णगिर्याख्यं पीठं कमलसम्भव ॥

कण्ठकूटे विशुद्धाख्यं यच्चक्रं षोडशाश्रकं ।
पीठं जालन्धरं नाम तिष्ठत्यत्र चतुर्मुख ॥

आज्ञानाम भ्रुवोर्मध्ये द्विदळं चक्रमुत्तमं ।
उढ्याणाख्यं महापीठं उपरिष्टात्प्रतिष्ठितं ॥

स्थानान्येतानि देहेस्मिन् शक्तिरूपं प्रकाशते । इति.

एवं—

*पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखं अधो †निष्ट्या वितस्त्यान्तु नाभ्यामुपरितिष्टति. ज्वालमालाकुलं भाति विश्वस्यायतनंमहत् सन्ततग्ंसिराभिस्तु लम्बत्याकोशसन्निभं. तस्यान्ते सुषिरग्ंसूक्ष्मं. तस्मिन्सर्वंप्रतिष्ठितं. तस्य मध्ये माहानग्निर्विश्वार्चिर्विश्वतोमुखः. सोग्रभुग्विभजन् तिष्ठन्नाहारमजरः कविः सन्तापयति स्वंदेहमापादतलमस्तकं. तस्य मध्ये वह्निशिखा अणीयोर्ध्वाव्यवस्थितः नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा नीवारशूकवत्तन्वी पीताभास्यात्तनूपमा. तस्याशिखायामध्ये परमात्मा व्यवस्थितः. इत्यादिच.

---

*नारायणपन्ने प्रश्नः ६. अनु ११. †निष्ट्या ग्रीवाबन्धात.

अनेन योगकौशलेन महामहिमशालिभिर्योगिभिः अधोमुखतया विद्यमानं हृदयपुंडरीकं रेचकप्राणायामेनोर्द्ध्वमुखं कृत्वा तत्रवा तत्तन्नाभीचक्रादिषु वा भगवति परमात्मनि यथाभिमतदेवतारूपध्यानगोचरीक्रियमाणे सति तेच योगिनः परमानन्दरसमरन्दास्वादमिळन्मिळिन्दायमानमानसाः भवन्तीत्यादि ज्ञेयं.

ध्यानन्तु*शब्दादिभ्योविषयेभ्यइत्यादिना प्रतिपादितपूर्वमेव.

गीयतेहि ध्यानाभ्यासप्रकारः-

†योगी युंजीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥
शुचौदेशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरं ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥
प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितः ।
मनस्संयम्य मच्चित्तोयुक्तआसीतमत्परः ॥

---

*अस्मिन्पुस्तके पुटं. ७५. †गीतावचनानि.

संकल्पप्रभवान् कामान्स्यक्त्वासर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥
शनैश्शनैरुपरमेद्बुध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥
यदाहि चेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसन्यासी योगारूढस्तदोच्यते ॥
उदासीनवदासीनोगुणैर्यो नविचाल्यते ।
गुणावर्तन्तइत्येव योवतिष्ठति नेंगते ॥
समदुःखसुखस्स्वस्थस्समलोष्टाश्मकांचनः ।
तुल्यप्रियाप्रियोधीरस्तुल्यनिन्दात्मसंस्तुतिः ॥
मानावमानयोस्तुल्यस्तुल्योमित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतस्सउच्यते ॥
उद्धरेदात्मनात्मानमात्मानं नावसादयेत् ।
आत्मैवह्यात्मनोबन्धुरात्मैवरिपुरात्मनः ॥
जितात्मनः प्रशान्तस्य परमात्मा समाहितः । इत्यादि.

समाधिर्नाम चित्तस्य ध्येयमात्रावस्थापनरूपोभावनाविशेषः. सद्विविधः सम्प्रज्ञातोसम्प्रज्ञातश्चेति. तावेव सबीजयोगनिर्बीजयोगाविति सालम्बयोगनिरालम्बयोगाविति समनस्कयोगामनस्कयोगाविति हठयोगराजयोगाविति सविकल्पकसमाधिनिर्विकल्पकसमाधीइति चो-

च्येते. तत्रदीर्घकालं ध्येयातिरिक्तसकलवृत्तिनिरोधस्सं-
प्रज्ञातः. सचाष्टविधः सवितर्कोनिर्वितर्कस्सविचारोनि-
र्विचारस्सानन्दआनन्दस्सास्मितोस्मिताचेति.

तत्र अभिमतदेवताविग्रहादिमहाभूतानि चक्षुरादी-
न्द्रियाणिचेति स्थूलानि ध्येयीकृत्य तत्तत्कार्यकारणभा-
ववाच्यवाचकभावाद्युल्लेखनपूर्वको भावनाविशेषस्सवि-
तर्कः. तादृगुल्लेखनरहितश्चेन्निर्वितर्कः.

पञ्चतन्मात्राण्यन्तःकरणंचेति सूक्ष्माणि ध्येयीकृत्य
तत्तदीयप्रकाशास्तमयाद्यनुकूलदेशकालादिविचारपूर्वको-
भावनाविशेषस्सविचारः. तादृग्विचाररहितश्चेन्निर्वि-
चारः. एवंपर्यन्तस्समाधिर्ग्राह्यसमापत्तिरित्युच्यते.

रजस्तमोलेशानुविद्धेप्यन्तःकरणे सुखप्रकाशमयस-
त्त्वांशमात्रं विषयीकृत्य तदुद्रेकस्फूर्तिपूर्वकोभावनाविशेष-
स्सानन्दः. तादृशस्फूर्तिरहितश्चेदानन्दः. अस्मिन्नेव-
समाधौ ये बद्धधृतयः तत्त्वान्तरं प्रकृतिपुरुषरूपं नपश्यन्ति
ते विगतदेहाहंकारत्वात् विदेहशब्दवाच्याः. इयमेव ग्रह-
णसमापत्तिरित्युच्यते.

रजस्तमोलेशानभिभूतमन्तर्मुखमान्तरं शुद्धंसत्त्व-
मालम्बनीकृत्य तादृशसत्त्वांशावशेषस्फूर्तिपूर्वकोभावना-

विशेषस्सास्मितः. तादृशस्फूर्तिरहितश्चेदस्मितेत्युच्यते. अस्मिन्नेव समाधौ ये कृतपरितोषाः परमात्मानं पुरुषं न पश्यन्ति तेषां चेतसि स्वकारणे लयमुपगते ते प्रकृतिलयाइत्युच्यन्ते. येतु परंपुरुषं ज्ञात्वा भावनायां प्रवर्तन्ते तेषामियं विवेकख्यातिर्गृहीतृसमापत्तिरितिच प्रोच्यते.

एतेष्वष्टसुसमाधिषु पूर्वपूर्वस्य सिद्धौसत्यामेव उत्तरोत्तरस्य सिद्धिसम्भवात्पूर्वपूर्वापेक्षया उत्तरोत्तरस्य उपर्युपरिसोपानरूपता ज्ञेया.

तथाच यथाहि प्राथमिकोधानुष्कः प्रथमं स्थूलंलक्ष्यं विध्यति ततः क्रमात्सूक्ष्मं सूक्ष्मतरं सूक्ष्मतमंच तद्वदेवैषसमाधिक्रमोपीति ज्ञेयं.

अत्रेदं बोध्यं—

योगांगभूताःयमादयःपंच सम्प्रज्ञातस्य बहिरंगाणि. धारणाध्यानसमाधयःअन्तरंगाणि. एतत्त्रयं वक्ष्यमाणासम्प्रज्ञातस्य बहिरंगं. तत्त्रयमेकविषयकंचेत्संयमइति व्यवह्रियते. तादृशस्य संयमस्य अभ्यासेन स्थिरीकरणात् परमाण्वादिसूक्ष्मवस्तुदर्शनशक्तिः दूरान्तर्हितवस्तुदर्शनशक्तिः परचित्तवेदनशक्तिः अन्तर्धानशक्तिः अनेकगजसिंह्यादिबलसम्पादनशक्तिः आकाशगमन-

शक्तिः परकायप्रवेशशक्तिः अणिमाद्यष्टसिद्धयश्चेति तास्तास्सिद्धयस्सम्पत्स्यन्ते. तास्सर्वाः परिगृण्हतापि विघ्नरूपास्ताइति मत्वा पुष्करपलाशवन्निर्लिप्तेन योगिना व्याधिसंशयप्रमादालस्योपेक्षाचांचल्यादीनन्तरायान् अवधीर्य परवैराग्येण क्रमादसंप्रज्ञातसमाधिस्थिरीकरणे प्रयतितव्यं इति.

ध्येयस्फूर्तिरहितोसम्प्रज्ञातः. स द्विविधः भवहेतुकः उपायहेतुकश्चेति. तत्र भवोनाम अतस्मिन् तद्बुद्धिरूपाज्ञानविजृम्भितमेव. तन्मूलकः प्रथमः. तथाच—येचानात्मभूतेषु तत्तद्विग्रहादिमहाभूतेन्द्रियतन्मात्राहङ्कारमहदव्यक्तेषु आत्मभावनया विलीनचित्ताः तेषांचित्तं एतत्समाधिसिद्धावपि सुप्तचित्तवत्पुनरुत्थाय संस्कारवशात्संसारे पतति. अतस्तेषां फलमनित्यमेव भवति. पठ्यतेहि—

*दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धादशसहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः ।
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते ॥ इति.

---

*वायवीयवचनं मणिप्रभाख्ययोगसूत्रव्याख्यायां प्रथमपादे एकोनविंशसूत्रविवरणावसरे उदाहृतं.

मन्वन्तरंनाम ब्रह्मणोक्तश्चतुर्दशीभागः. निर्गुण-पुरुषप्राप्तिप्रकारस्तु अनुपदमेव प्रदर्शयिष्यते. एवंच योगाभासरूपत्वादमुं समाधिं परित्यज्य मुमुक्षुभिरुपायहेतुकसमाधिस्थिरीकरणे प्रयतितव्यं.

तत्तदुपायैर्जायमानः परमप्रयोजनात्मककैवल्यकारणभूतश्च यस्सद्वितीयस्समाधिः. तेचोपायाः श्रद्धासमुत्साहवैराग्यभक्तिभावनादयएव ज्ञेयाः. इतियोगनिरूपणं.

---

## मतप्रकरणं.

एतावत्पर्यन्तं प्रतिपादितास्सर्वेपिविषयाः सर्वसाधारणाएव भवन्ति. तएते भक्तिभावनाद्युपायास्तावत् तत्र-तत्र भिन्नभिन्नप्रकारास्संदृश्यन्ते. अतस्तत्तन्मतानुसारक्रमात् अत्रैतेपन्थानो भवन्ति. तथाहि—

### (अद्वैतनिरूपणं).

येचयेच—शमदमतितिक्षासमाधानश्रद्धासु बद्धादराः, अमानित्वादम्भित्वादिकमत्यजन्तः, यमनियमासनप्राणायामादीन् स्मृतिपथमारोपयन्तः, प्रणवैकपरायणाः.

*विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाकेच पण्डितास्समदर्शिनः ॥

इत्यर्थमनुसरन्तः, किंच—

---

*गीतायां अ. ५.

*नाविरतो दुश्चरितान्नाऽशान्तो नासमाहितः।
नाऽशान्तमानसोवापि प्रज्ञानेनैनमाप्नुयात् ॥

इत्थमंतारः,

†जाग्रत्स्वप्नसुषुप्तिषुस्फुटतरा यासंविदुज्जृम्भते ।
या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी ॥

सैवाहं नचदृश्यवस्त्विति दृढाप्रज्ञैव यस्यास्तिचेत् ।
चण्डालोस्तु सतु द्विजोस्तु गुरुरित्येषा मनीषा मम ॥

इत्यवधारयन्तः, सवितर्कनिर्वितर्कादिभिः कस्मिंश्चिदभिमतेवस्तुनि सोहमित्येकतत्त्वाभ्यासमाचरन्तः, परमवैराग्यपदव्याः परांकोटिमारूढाः, यथाहि स्वप्नावस्थायामनुभूयमानाः सर्वेपिपदार्थाः सत्यवदेव प्रतिभान्ति जागरेसति तच्चसर्वं ऐन्द्रजालिकव्यापारवदन्तर्हितीभवति तदा स्वात्मैवकेवलमवशिष्यते तद्वदेव व्यवहारावस्थायां सर्वंजगत् सत्यमिवोपलभ्यते परमार्थतस्तु प्रत्यस्तमितभेदंयत्सत्तामात्रमगोचरं तदेकमेव वस्त्ववभासते इत्यालोच्य दृष्टे श्रुते भुक्ते त्यक्ते अग्रे पश्चात् दिक्षु विदिक्षुचेति सर्वत्र वासुदेवस्सर्वमिति भगवन्तमेवभावयन्तः; किंच–

*कठोपनिषद्वल्ली २. †मनीषापञ्चके.

*यथैकस्मिन्घटाकाशे रजोधूमादिभिर्युते ।
नसर्वे सम्प्रयुज्यन्ते तद्वज्जीवास्सुखादिभिः ॥
घटादिषु प्रलीनेषु घटाकाशादयोयथा ।
आकाशे सम्प्रलीयन्ते तद्वज्जीवाइहात्मनि ॥

इति विमर्शयन्तः, किंच—

तत्त्वमसि अहंब्रह्मास्मि ब्रह्मविद्ब्रह्मैवभवति मृत्योस्समृत्युमाप्नोति यइहनानेवपश्यतीत्यादि निश्चिन्वानाः, किंच—

†छन्नेऽविद्यारूपपटेनैवच विश्वं ।
यत्राध्यस्तं जीवपरेशत्वमपीदं ॥
भानोर्भानुष्वम्बुवदस्ताखिलभेदं ।
तंप्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥

इतिब्रह्मैक्यमनुसन्दधानाश्च भवन्ति—तेषामेवहि ब्रह्मनिष्ठानां सकलजगदाद्यकारणध्यानात्मकसन्तताविच्छिन्नप्रत्ययवशात् तदानीं प्रकृत्यादिधरण्यन्तस्सर्वोपिप्रपञ्चः दुःखमयः जडः अनित्यश्च एतद्विलक्षणोयस्सच्चिदानन्दरूपःपरमात्मा सोहमस्मीति काचिदपरोक्षानुभू-

---

*गौडपादाचार्यकृतमाण्डूक्योपनिषत्कारिका.

†शंकरभगवत्पादाचार्यकृत दक्षिणामूर्तिस्तवे.

तिर्जायते. सैव सततसाधनवशात्समुत्पन्नतत्त्वज्ञान-मिति अलौकिकप्रत्यक्षमितिच प्रतिपाद्यते. विशेषत-स्तदाकारतल्लक्षणादिकन्तु तदानीं तैरेव ज्ञेयम्भवति.

एतादृशतत्त्वसाक्षात्कारे समुत्पन्ने तदनुपदमेव अहं कर्ता कारयिता भोक्ता भोजयिता सुखी दुःखीत्याद्यस्मिता-रूपोऽभिमानः प्रचण्डतरमार्ताण्डमण्डलप्रभाखण्डितत-मःकाण्डइव निवर्तते. सोभिमानएव हृदयग्रन्थिरित्यु-च्यते. किञ्च सर्वेचसंशयाः खरतरखरकिरणकिरण-स्पृष्टनीहारवन्निलीयन्ते. सञ्चितागामिप्रारब्धानीति-त्रिविधानि कर्माणि स्वयमतिदूरीभवन्ति.

श्रूयतेहि—

*भिद्यतेहृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥ इति.

गीयतेचकर्मनिवृत्तिः—

†यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेर्जुन ।
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा॥ इति.

एवमेवान्येपि रागद्वेषाभिनिवेशाद्यविद्याग्रन्थिरूपा-स्सर्वेपि दोषाः गगनकमलिनीतटीसुमवाटीषु विश्रान्ति-सुखमनुभवन्ति. तथाच तदानीं तेषांमहात्मनां क्वचिद-

---

*द्वितीयमुंडके ख. २. †गीतायां अ. ४.

पिकार्ये प्रवृत्तिर्नभवति. तदभावाज्जन्मकारणभूतधर्मा-धर्मौ नभवतः. तदभावात्पुनर्जन्म नभजन्ते. परन्तु निर्दग्धनिखिलकर्मतया प्रारब्धकर्मपरिपाकरूपं देहमपि अंगीकर्तुमनंगीकर्तुमन्यथाकर्तुंच प्रभवन्तः, वसिष्ठादिव-न्नारदादिवत्सनकादिवच्च दग्धपटन्यायेनविद्यमानान्तः-करणमात्रावशेषाश्च भूत्वा स्वयमविद्यया निर्मुच्यमानतया आध्यात्मिकादिसकलदुःखान्यतीत्य कृतार्थाइति अन्त-र्मुखाइति आत्मारामाइति जीवन्मुक्ताइतिच प्रोच्यमा-नास्सन्तः, सप्तमीं ज्ञानभूमिकामाधिरूढतया सुषुप्ताइव स्वरूपमात्रेणावतिष्ठन्ते. तदानींहि—

*(नभूमिर्नतोयं नतेजोनवायु-
र्नखं नेन्द्रियंवा न तेषां समूहः ॥
अनेकान्तिकत्वात्सुषुप्तैकसिद्ध-
स्तदेकोऽवशिष्टश्शिवःकेवलोहं ॥
न वर्णा नवर्णाश्रमाचारधर्माः ।
न मे धारणाध्यानयोगादयोपि ॥
अनात्माश्रयाहंममाध्यासहाना-
त्तदेकोऽवशिष्टश्शिवःकेवलोहं ॥

---

*शंकरभगवत्पादाचार्यकृतदशश्लोक्यां.

नसांख्यं नशैवं नसत्पांचरात्रं ।
नजैनं न मीमांसकादेर्मतं वा ॥
विशिष्टानुभूत्या विशुद्धात्मकत्वा-
त्तदेकोऽवशिष्टश्शिवः केवलोहं ॥)
नशास्तानशास्त्रं नशिष्योनशिक्षा ।
नचत्वंनचाहं नचायंप्रपंचः ॥
स्वरूपावबोधो विकल्पासहत्वा-
त्तदेकोऽवशिष्टश्शिवःकेवलोहं ॥

प्रतिपाद्यन्तेहि सप्तज्ञानभूमिकाप्रकाराः—

*ज्ञानभूमिश्शुभेच्छाख्या प्रथमा समुदाहृता ।
विचारणाद्वितीयातु तृतीया तनुमानसा ॥
सत्वापत्तिश्चतुर्थी स्यात् ततोसंसक्तिनामिका ।
पदार्थाभाविनीषष्ठी सप्तमीतुर्यगास्मृता ॥
स्थितःकिंमूढएवास्मि प्रेक्षेहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥
शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकं ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥

---

*ज्ञानवासिष्ठे, उत्पत्तिप्रकरणे. सर्गः ११८.

विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता ।
यात्र सा तनुताभावात् प्रोच्यते तनुमानसा ॥
भूमिकात्रितयाभ्यासात् चित्तेऽर्थे विरतेर्वशात् ।
सत्यात्मनि स्थितिश्शुद्धे सत्त्वापत्तिरुदाहृता ॥
दशाचतुष्टयाभ्यासादसंसंगफलेनच ।
रूढसत्त्वचमत्कारात् प्रोक्ताऽसंसक्तिनामिका ॥
भूमिकापंचकाभ्यासात् स्वात्मारामतयादृढं ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥
परप्रयुक्तेन चिरंप्रयत्नेनार्थभावनात् ।
पदार्थाभावनानाम्नी षष्ठी संजायते गतिः ॥
भूमिषट्कचिराभ्यासात् भेदस्यानुपलम्भतः ।
यत्स्वभावैकनिष्ठत्वं साज्ञेया तुर्यगा गतिः ॥ इति.

इयमेव निर्विकल्पकसमाधिसिद्धिरित्युच्यते. एवमेव केषांचित्सिद्धानांयोगिनां सदावस्थानं भवतीति ज्ञेयं.

यदातैस्तादृशी वासनातनुः त्यक्तव्या भवति तदानीं ते शुद्धचित्स्वरूपाः परमात्मरूपेपरमपदे प्रविश्य प्रदीपनिर्वाणवद्घटाकाशवच्च निवृत्तिमुपगम्य शुद्धब्रह्मरूपा-एव भवन्ति. तथाच यथोदकं शुद्धेशुद्धमासिक्तं तादृगेव भवति तेषां स्वरूपमिति ज्ञेयं.

श्रूयतेहि—

*वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयश्शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥

†यदासर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतोभवति अत्र ब्रह्म समश्नुते ॥एवं—

*स योहवै तत्परमंब्रह्मवेद ब्रह्मैव भवति.

*यथा नद्यस्स्यन्दमानास्समुद्रे अस्तंगच्छन्ति नामरूपे विहाय ।
तथाविद्वान्नामरूपाद्विमुक्तः परात्परंपुरुषमुपैति दिव्यं ॥ इत्यादिच.

स्मर्यतेच—

‡शकुनीनामिवाकाशे जले वारिचरस्य च ।
पदं यथा नदृश्येत तथा ज्ञानविदां गतिः ॥इति.

इयमेव परमार्थमुक्तिरित्युच्यते.

---

*तृतीयमुंडके. ख. २.

†कठोपनिषदि वल्ली. ६.

‡शांकरतृतीयमुंडकोपनिषद्भाष्ये खं. २.

प्रोच्यतेहि—

*परमार्थतस्तुमुक्तस्सर्वेशत्वादिधर्मनिर्मुक्तं ।
विगळितसकलविकल्पं विमलंब्रह्मैव केवलं भवति॥

इति.

संगृह्यप्रतिपाद्यतेच तदेतत्सर्वं—

†तत्र या प्रकृतिः प्रोक्ता सा राजन् द्विविधा स्मृता ।
सत्वात्मिकातु मायास्यात् अविद्या गुणमिश्रिता ॥
स्वाश्रयं यातु संरक्षेत्सामायेति निगद्यते ।
तस्यां यत्प्रतिबिम्बं स्यात् बिम्बभूतस्य चेशितुः ॥
स ईश्वरस्समाख्यातस्स्वाश्रयज्ञानवान् परः ।
सर्वज्ञस्सर्वकर्ताच सर्वानुग्रहकारकः ॥
अविद्यायान्तु यत्किंचित्प्रतिबिम्बं नगाधिप ।
तदेव जीवसंज्ञं स्यात्सर्वदुःखाश्रयं पुनः ॥
द्वयोरपीह संप्रोक्तं देहत्रयमविद्यया ।
देहत्रयाभिमानाच्च अभून्नामत्रयं पुनः ॥
प्राज्ञस्तुकारणात्मास्यात्सूक्ष्मदेहीतु तैजसः ।
स्थूलदेहीतु विश्वाख्यस्त्रिविधः परिकीर्तितः ॥
एवमीशोपि संप्रोक्तः ईशसूत्रविराट्पदैः ।
प्रथमोव्यष्टिरूपस्तु समष्ट्यात्मापरस्स्मृतः ॥

---

*सिद्धान्तकल्पतरौ. †देवीभागवते. स्कं ७. अध्या. ३२—३३.

सहिसर्वेश्वरस्साक्षाज्जीवानुग्रहकाम्यया ।
करोति विविधं विश्वं नानाभोगाश्रयं पुनः ॥

घठाकाशमहाकाशविभागः कल्पितोयथा ।
तथैव कल्पितोभेदो जीवात्मपरमात्मनोः ।

यथाजीवबहुत्वंच माययैव नतु स्वतः ।
तथेश्वरबहुत्वंच मायया नस्वभावतः ॥

रज्जुर्यथा सर्पमालाभेदैरेका विभातिहि ।
तथैवेशादिरूपेण भाम्यहं नात्रसंशयः ॥

व्यवहारदशा सेयं मायाविद्येति विश्रुता ।
तत्त्वदृष्ट्यातु नास्त्येव तत्त्वमेवास्ति केवलं ॥

अधिष्ठानातिरेकेण कल्पितं तन्नभासते ।
तस्मान्मत्सत्तयैवैतत्सत्तावन्नान्यथा भवेत् ॥

इत्यादिज्ञेयं.

(वैष्णवविशिष्टाद्वैतनिरूपणं)

अन्येच येचयेच-अमानित्वादम्भित्वादिकमत्यजन्तः, यमनियमादियोगसाधनसमन्विताः, प्रणवैकपरायणाः, निष्कामनया यथाशक्ति पंचमहायज्ञाद्यनुष्ठानतत्पराः, वासुदेवस्सर्वमिति सर्वत्र भगवन्तमनुसन्दधानाः,

श्रवणं कीर्तनं विष्णोस्स्मरणं पादसेवनं ।

अर्चनं वन्दनं दास्यं सख्य मात्मनिवेदनं ॥

इतिनवविधां भक्तिमतिद्रढयन्तः,

भगवदाज्ञानुज्ञाकैंकर्यादितत्पराः, भगवद्भागवतापचारांश्च वर्जयन्तः, किंच-* (परमपदव्योमाकाशाप्राकृतलोकानन्दलोकवैकुंठायोध्यादिशब्दवाच्यायां भगवद्विभूतौ वैकुंठनामनगरं. तत्रानन्दनामकोदिव्यालयः. तदन्तः रत्नमयानेकस्तम्भसहस्रैर्विराजिता महामणिमंटपाख्या सभा. तस्यां सहस्रफणामणितेजोविराजितोनन्तः. तस्मिन् धर्मादिमयंदिव्यसिंहासनं. तदुपरि चामरहस्ताभिर्विमलादिभिस्सेव्यमानं अष्टदळात्मकंपद्मं. तदुपरि प्रकृष्टविज्ञानधामा शेषः. तदुपरि वाचःपरं महद्भूतं). तदेव सूक्ष्मचिदचिद्विशिष्टं कारणं भवति. स्थूलचिदचिद्विशिष्टं कार्यं. स सकलव्यापकः नित्यनिरवद्य निरतिशयौज्वल्यसौन्दर्यसौकुमार्यादिगुणयुक्तदिव्यमंगळविग्रहधरः श्रीमन्नारायणाख्यः परमात्मैव भक्तिप्रपत्तिमतां संसारसागरतरणतरणिर्भवति. इत्यनुसन्दधानाः, परमवैराग्यपद्धत्याः परांकोटिमारूढाः, भगवदनुग्रहवशात्परमभक्त्यैकपरायणाश्च भवन्ति—तेपि

---

*यतीन्द्रमतदीपिकायां.

महात्मानः, सकलजगद्व्यतिरिक्तात्मस्वरूपसाक्षात्कारमधिगम्य सकलबन्धविनिर्मुक्ताः, परमात्मसन्निधिमेत्य कर्तृत्वभोक्तृत्वादिकं वर्जयित्वा तदितरसकलभोगसमन्विताः, परमपुरुषवदेव नित्यानन्दमनुभवन्ति.

श्रूयतेहि—

*यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं-
ब्रह्मयोनिं ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं
साम्यमुपैति ॥ इत्यादि.

प्रतिपाद्यतेच मुक्तस्वरूपं—

†मुक्तोनाम—उपायपरिग्रहानन्तरं नित्यनैमित्तिकभगवदाज्ञानुज्ञाकैङ्कर्यरूपाणि कर्माणि स्वयंप्रयोजनतया कुर्वन्, भगवद्भागवताचार्यापचरांश्च वर्जयन्, देहावसाने सुकृतदुष्कृते मित्रामित्रयोर्निक्षिपन्, वाङ्मनसीत्यादिप्रकारेण हार्दपरमात्मनि विश्रम्य मुक्तिद्वारभूतसुषुम्नानाडीं प्रविश्य तया ब्रह्मरन्ध्रान्निष्क्रम्य हार्देनसाकं सूर्यकिरणद्वारा अग्निलोकं गत्वा दिनपूर्वपक्षोत्तरायणसंवत्सराद्यभिमानदेवताभिः वायुनाच पथि सत्कृतः, सूर्यमण्डलं भित्वा रथचक्रद्वारा भद्वाराच सूर्यलोकं गत्वा अनन्तरं चन्द्रविद्युद्वरुणेन्द्रप्रजापतिभिर्मार्गदर्शिभिः आ-

*तृतीयमुंडके ख. १.        †यतीन्द्रमतदीपिकायां.

तिवाहिकैर्गणैस्सह सोपचारं तत्तल्लोकानतीत्य प्रकृतिवैकुं-
ठसीमापरिच्छेदिकां विरजां तीर्त्वा सूक्ष्मशरीरं विहाय
अमानवकरस्पर्शादप्राकृतदिव्यविग्रहयुक्तः, चतुर्भुजः, ब्र-
ह्मालंकारेणालंकृतः, इन्द्रप्रजापतिसंज्ञिकनगरपालाभ्यनु-
ज्ञया श्रीवैकुंठदिव्यनगरं प्रविश्य पताकालङ्कृतदीर्घप्रा-
कारसहितगोपुरमतीत्य ऐरम्मदाख्यामृतसरः सोमसव-
नाख्याश्वत्थंच दृष्ट्वाशतंमालाहस्ताइत्याद्युक्तपंचशताप्स-
रोगणैरुपचरितः, ब्रह्मगन्धादिभिरलंकृतः, तत्रत्यानन्त-
गरुडविष्वक्सेनादीन्प्रणम्य तैर्बहुमतः, महामणिमंटपमा-
साद्यपर्यङ्कसमीपे स्वाचार्यान्प्रणम्य पर्यङ्कसमीपं ग-
त्वा तत्रधर्मादिपीठोपरिकमले अनन्ते विमलादिभिस्सेव्य-
मानं श्रीभूनीळासमेतं शङ्खचक्रादिदिव्यायुधोपेतं जा-
ज्वल्यमानकिरीटमकुटचूडावतंसमकरकुंडलग्रैवेयकहार-
केयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदरबन्धनपीताम्ब-
रकांचीगुणनूपुराद्यपरिमितदिव्यभूषणैर्भूषितं अपरिमि-
तगुणोदारसागरं भगवन्तं दृष्ट्वा पादेन पर्यंकमारुह्य
तेन स्वाङ्केस्थापितः, कोसीतिपृष्टः, ब्रह्मप्रकारोस्मी-
त्युक्त्वा तेनकटाक्षितः, तदनुभवजनितहर्षप्रकर्षात् सर्वदे-
शसर्वकालसर्वावस्थोचितसर्वकैङ्कर्यैकरतिः, आविर्भू-
तगुणाष्टकः, उत्तरावधिरहितब्रह्मानुभववान् स मुक्तइत्यु-

च्यते. तस्य नानात्वं सर्वलोकसंचरणं च सम्भवति.
इति.

संगृह्यप्रतिपाद्यतेच्च तदेतत्सर्वं—

*ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः ।
वासुदेवः परंब्रह्म कल्याणगुणसंयुतः ।
भुवनानामुपादानं कर्ता जीवनियामकः ॥
वालाग्रशतभागस्यशतधाकल्पितस्यच ।
भागोजीवस्सविज्ञेयः सचानन्त्यायकल्पते ॥
वासुदेवस्स्वभक्तेषु वात्सल्यात्तत्तदीप्सितं ।
अधिकार्यानुगुण्येन प्रयच्छति फलं बहु ॥
उपासकानुगुण्येन भजतेमूर्तिपंचकं ।
तदर्चाविभवव्यूहसूक्ष्मान्तर्यामिसंज्ञकं ॥
प्रतिमादिकमर्चास्यात् अवतारास्तु वैभवाः ।
संकर्षणो वासुदेवः प्रद्युम्न श्चानिरुद्धकः ॥
व्यूहश्चतुर्विधोज्ञेयः सूक्ष्मं सम्पूर्णसद्गुणं ।
तदेव वासुदेवाख्यं परंब्रह्म निगद्यते ॥
अन्तर्यामी जीवसंस्थो जीवप्रेरकईरितः ।
पूर्वपूर्वोदितोपास्तिविशेषक्षीणकल्मषः ॥

*सर्वदर्शनसंग्रहीयरामानुजदर्शने. पांचरात्ररहस्यादिग्रन्थानुवादः.

उत्तरोत्तरमूर्तीनामुपास्त्यधिकृतोभवेत् ।
एवंब्रहरहश्श्रौतस्मार्तधर्मानुसारतः ॥
उक्तोपासनया पुंसां वासुदेवः प्रसीदति ।
अविद्यां कर्मसंघातरूपां सद्योनिवर्तयेत् ॥
ततस्स्वाभाविकाः पुंसां ते संसारतिरोहिताः ।
आविर्भवन्ति कल्याणास्सर्वज्ञत्वादयोगुणाः ॥
एवंगुणास्समानास्युः मुक्तानामीश्वरस्यच ।
सर्वकर्तृत्वमेवैकं तेभ्योदेवे विशिष्यते ॥
मुक्तास्तु शेषिणि ब्रह्मण्यशेषे शेषरूपिणः ।
सर्वानश्नुवतेकामान् सहतेन विपश्चिता ॥

इत्यादिज्ञेयं.

(द्वैतनिरूपणं).

अपरेच येचयेच शमदमादिसम्पन्नाः, अमानित्वाद-म्भित्वादिकमत्यजन्तः, यमनियमाद्यष्टांगयोगनिष्ठागरिष्ठाः, प्रणवैकपरायणाः, भारतीरमणमुख्यप्राणादितत्त्वदेवतान्तर्गतोयं विष्णुः परमः इतिभगवति न्यस्तात्मानः, तत्कथाश्रवणतन्नामकीर्तनतदाराधनादिभिः भगवदनुग्रहमुपार्जयन्तः, जीवाणुत्वदासत्वपांचरात्रोपजीव्यत्वप्रपञ्चभेदसत्यत्वादिकं वैष्णवविशिष्टाद्वैतिनइव स्वयमप्यङ्गीकुर्वाणाः किञ्च—

बळित्थातद्वपुषेधायिदर्शितं देवस्य भर्गस्सहसो यतो-जनि. इतिश्रुत्यवगम्यमानेषु रूपेषु—

*प्रथमस्तु हनूमांत्स्याद्वितीयो भीमएवच ।
पूर्णप्रज्ञस्तृतीयश्च भगवत्कार्यसाधकः ॥

इति तत्तद्रूपानुसन्धानैः भगवद्भक्तवन्दनसदाचार्यसंसे-वनादिभिश्च भगवति भक्तिप्रकर्षमतिद्रढयन्तः, दृढतरध्या-नयोगैः वासुदेवस्सर्वमिति सर्वत्र भगवन्तमेव भावय-न्तश्च भवन्ति, तेच परमभागवताः, सकलजगदतिरि-क्तमात्मतत्त्वं साक्षात्कृत्य भगवदनुग्रहवशात् सकलब-न्धविनिर्मुक्ताः, भगवत्सान्निध्यमधिगम्य तत्तद्दिव्यभोग-समन्विताः, तत्तत्तारतम्यानुसारेणनित्यानन्दमनुभवन्ति.

अत्रापि मुक्तस्वरूपं प्रायशः वैष्णव विशिष्टाद्वैतव-देवबोध्यं.

श्रूयतेह्यानन्दतारतम्यप्रकारः—

†सैषाऽऽनन्दस्य मीमाग्ंसाभवति. युवास्यात्साधुयुवा-ध्यायिकः आशिष्ठोद्रढिष्ठोबलिष्ठः. तस्येयंपृथिवीसर्वावि-त्तस्यपूर्णा स्यात् सएकोमानुषआनन्दः. (श्रोत्रियस्यचा-कामहतस्य) तेयेशतंमानुषाआनन्दाः सएकोमनुष्यगन्ध-

*सर्वदर्शनसंग्रहीयपूर्णप्रज्ञदर्शने.　　†तैत्तरीये अ. २. अनु. ८.

र्वाणामानन्दः. (श्रो॰) तेयेशतंमनुष्यगंधर्वाणामानन्दाः सएकोदेवगंधर्वाणामानन्दः. (श्रो॰) तेयेशतंदेवगंधर्वाणामानंदाः सएकः पितॄणांचिरलोकलोकानामानन्दः. (श्रो॰) तेयेशतंपितॄणांचिरलोकलोकानामानन्दाः सएकआजानजानांदेवानामानन्दः. (श्रो॰) तेयेशतमाजानजानांदेवानामानन्दाः सएकःकर्मदेवानांदेवानामानन्दः. येकर्मणादेवानपियन्ति. (श्रो॰) तेयेशतं कर्मदेवानां देवानामानन्दाः सएकोदेवानामानन्दः. (श्रो॰) तेयेशतंदेवानामानन्दाः सएकइन्द्रस्यानन्दः. (श्रो॰) तेयेशतमिन्द्रस्यानन्दाः सएकोबृहस्पतेरानन्दः. (श्रो॰) तेयेशतंबृहस्पतेरानन्दाः सएकःप्रजापतेरानन्दः. (श्रो॰) तेयेशतंप्रजापतेरानन्दाः सएकोब्रह्मणआनन्दः. (श्रो॰) सयश्चायंपुरुषे यश्चासावादित्ये सएकः सयएवंवित् अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसंक्रामति. एतंप्राणमयमात्मानमुपसंक्रामति. एतंमनोमयमात्मानमुपसंक्रामति. एतंविज्ञानमयमात्मानमुपसंक्रामति. एतमानन्दमयमात्मानमुपसंक्रामति. तदप्येषश्लोकोभवति—

यतोवाचोनिवर्तन्ते अप्राप्यमनसासह ।

आनन्दंब्रह्मणोविद्वान् नबिभेतिकुतश्चन ॥ इति.

संगृह्यप्रतिपाद्यतेच तदेतत्सर्वं—

*स्वतन्त्रमस्वतन्त्रंच द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रोभगवान्विष्णुः निर्दोषोशेषसद्गुणः ॥
यथा पक्षीच सूत्रंच नानावृक्षरसा यथा ।
यथा नद्यस्समुद्राश्च शुद्धोदलवणौ यथा ॥
चोरापहार्यौ च यथा यथापुंविषयावपि ।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ॥
जीवस्य परमैक्यंच बुद्धिसारूप्यमेववा ।
एकस्थाननिवासोवा व्यक्तिस्थानमपेक्ष्यवा ॥
नस्वरूपैकता तस्य मुक्तस्यापि निरूपतः ।
अतत्त्वमितिवा च्छेदस्तेनैक्यं सुनिराकृतं ॥
तथापि सूक्ष्मरूपत्वान्नजीवात्परमोहरिः ।
भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोपिसन् ॥
वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा ।
ब्रह्मा शिवस्सुराद्याश्च शरीरक्षरणात् क्षराः ॥
लक्ष्मीरक्षरदेहत्वादक्षरान्तःपरोहरिः ।
स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः ॥
निस्सीमत्वेन तेसर्वे तद्वशास्सर्वदेवताः ।
विष्णुं सर्वगुणैःपूर्णं ज्ञात्वा संसारवर्जितः ॥

---

*सर्वदर्शनसंग्रहीयपूर्णप्रज्ञदर्शने.

निर्दुःखानन्दभुङ्नित्यं तत्समीपे स मोदते । इति-
अन्यश्चसंग्रहश्लोकः—

*श्रीमन्मद्ध्वमते हरिःपरतर स्सत्यंजग त्तत्त्वतो—
भेदो जीवगणाहरेरनुचरानीचोच्चभावंगताः ॥
मुक्तिर्नैजसुखानुभूति रमलाभक्तिश्चतत्साधनं ।
ह्यक्षादित्रितयंप्रमाण मखिलाम्नायैकवेद्योहरिः ॥

इत्यादिज्ञेयं.

(शैवविशिष्टाद्वैतानिरूपणं).

इतरेच येचयेच—अमानित्वादम्भित्वादिकमत्यजन्तः, शिवार्चनैकव्रतिनः, शिवैकपरायणाः, शिवएव सकल-कारणं सर्वं शिवमयंजगदित्याद्यनुसन्दधानाः,

†श्रवणं कीर्तनं शम्भोस्स्मरणं पादसेवनं ।
अर्चनं वन्दनं दास्यं सख्य मात्मनिवेदनं ॥

इतिनवविधांभक्तिं अतिद्रढयन्तः. किंच—

शैवशास्त्रीयचर्यापादानुसारेण च निष्कामनयाश्रौत-स्मार्तनित्यनैमित्तिकादिकर्मानुष्ठाननिष्णाताः; योगपादा-नुसारेण यमनियमादियोगसरणिसंचरणजंघालाः, क्रि-यापादानुसारेण यथाविधि साङ्गशैवदीक्षाक्रमात् पर-

---

*श्रीमद्व्यासराजाचार्यप्रणीतः. †शंकरसंहितायां उत्तरभागे.

मात्मानं प्रसादयन्तः, विद्यापादानुसारेण पतिपशुपा-
शमन्त्रमन्त्रेश्वरस्वरूपमाहात्म्यादितत्तद्विषयज्ञानमुपार्ज-
यन्तः, परमवैराग्यपदव्याः परांकोटिमारूढाश्चभवन्ति,
तेचशिवभागवताः सकलसंसारपाशानतीत्य शिवसारू-
प्यमेत्य परमपदे विहरमाणाः भवन्ति.

प्रोच्यतेहिभगवता—

*पाशबद्धोभवेज्जीवः पाशमुक्तस्सदाशिवः एवं—

*मयाक्रीडन्ति तेसर्वे मुक्ता मद्भावमाश्रिताः ।
मत्सास्येन चिदानन्दपूर्णा मन्मूर्तिमूर्तयः ॥

इत्यादि.

संगृह्यप्रतिपाद्यतेहि शैवमतसरणिरित्थं—

पतिः पशुः पाशश्चेति त्रिविधःपदार्थः. तत्र पति-
र्नाम सर्वज्ञत्वसर्वकर्तृत्वादिसकलशक्ति युक्तः परमेश्वरः.
सचेश्वरस्स्वभक्तानुजिघृक्षया कर्ममलाद्यसंस्पृष्टाप्राकृता-
निरूपितदिव्यमंगळविग्रहविशिष्टस्सन् सद्योजातवामदे-
वाघोरतत्पुरुषेशानाइति पंचधा भूत्वा क्रमात् सृष्टिस्थि-
तिलयतिरोभावानुग्रहात्मककृत्यपंचकं कल्पयति.

पशुर्नाम क्षेत्रज्ञादिपदवेदनीयो जीवात्मा. सचाणु-
रूपोभवति. यथहिचन्दनाबिन्दुः शरीरैकदेशस्थोपि स-

*शंकरसंहितायां उत्तरभागे.

प्रीतनुमाह्लादयति एवमयमात्मा स्वयमणुरूपेण दहर-कुहरान्तर्गतोपि ज्ञानशक्त्या सर्वं व्याप्नोति. तादृशाश्चाणवोबहवोभवन्ति. तत्तत्स्वरूपादिकमनुपदमेव प्रदर्शयिष्यते.

पाशोनाम साक्षात्परशिवत्वप्राप्तिप्रतिबन्धकपदार्थ-रूपः. सच पाशश्चतुर्विधः रोधशक्तिमलमायाकर्मा-णीति. तत्र रोधशक्तिर्नाम सर्वजीवानुग्राहिणीशिव-शक्तिः. मलोनाम जीवस्य स्वरूपतिरोधानेन कर्तृत्व-भोक्तृत्वादिसकलसंसारबन्धाननुभावयित्री आवरणशक्तिः इयमेवोपनिषत्सु अविद्येत्युच्यते. तथाच इयंशक्तिः ता-म्राश्रितकालिकादोषवत् जीवाश्रितस्वाभाविकाशुद्धिदो-षरूपेतिज्ञेयं. मायानाम मात्यस्यांसकलंजगदिति स-कलजगत्प्रकाशास्तमयाद्यनुकूलमूलकारणरूपा जडत्वप-रिणामित्वादिमती शैवीशक्तिः. कर्मनाम क्रियतेफला-र्थिभिरिति सदसत्प्रवृत्तिजन्यानादिधर्माधर्मरूपं.

तथाच येच विज्ञानयोगसंन्यासैर्भोगेनवा सकल-कर्मक्षयेसति कस्यापिभोगबन्धस्याभावात् स्वाभाविक-मलैकावशेषाः समाप्तेतरसकलकलुषाश्च भवन्ति, तान्पु-रुषधौरेयान् अधिकारयोग्याननुगृह्य परमेश्वरः अनन्ता-दिविद्येश्वराष्टकपदं प्रापयति.

निर्दिश्यन्तेह्यष्टविधाश्च ते विद्येश्वराः—

*अनन्तश्चैव सूक्ष्मश्च तथैवचशिवोत्तमः।

एकनेत्र स्तथैवैकरुद्रश्चापि त्रिमूर्तिकः॥

श्रीकंठश्च शिखंडीच प्रोक्ताविद्येश्वराइमे। इति.

येषान्तु सकलकर्मक्षयेपि कालुष्यमसमाप्तंताननुगृह्य परमेश्वरः सप्तकोटिमहामन्त्रात्मकानातनोति-प्रतिपाद्यतेहि—

आद्याननुगृह्य शिवो विद्येशत्वे नियोजयति।

मन्त्रांश्चकरोत्यपरान् तेचोक्ताः कोटयस्सप्त॥ इति.

तएते समाप्तकलुषा असमाप्तकलुषाश्चेति द्विविधा-अपि विज्ञानाकलाइतिज्ञेयाः.

येषांच पशूनां स्वकृतसुकृतविशेषैः योगेन दीक्षयाच कर्ममलात्मकपाशद्वयं यदा पक्वं भवति तदानीं ते सकलसंसारबन्धविनिर्मुक्तास्सन्तः शिवपदप्राप्तिरूपां मुक्तिमुपयान्ति. येषां तादृशकर्ममलात्मकपाशद्वयं यावदपक्वमेव वर्तते तावत्पर्यन्तमपि ते जनाः मोक्षपर्यन्तावस्थायिसूक्ष्मदेहात्मकपुर्यष्टकयुतास्सन्तः स्वस्वकर्मानुरूपं स्थावरतिर्यग्देवमानवादिजन्मप्राप्नुवानाः खिद्यन्ते. तएते

*एतत्प्रमाणादि शैवमतविषयाः सर्वदर्शनसंग्रहीयशैवदर्शनात्संगृहीताः.

पक्कपाशद्वयाअपक्कपाशद्वयाश्चेति द्विविधाअपि प्रलया-
कलाइतिज्ञेयाः.

येषामणूनां यथाविधिशिवदीक्षादिवशात् मलमाया-
कर्मात्मकपाशत्रयमपि यदा पक्कं भवति तदानीं पर-
मेश्वरस्ताननुगृह्य मंडल्याद्यष्टादशमन्त्रेश्वरपदं वितरति.
प्रदर्श्यन्तेहि तेमन्त्रेश्वराः—

तत्राष्टौमण्डलिनः क्रोधाद्या स्तत्समाश्च वीरेशः ।
श्रीकण्ठ श्शतरुद्रा श्शतमित्यष्टादशाभ्यधिकं ॥ इति.

येषान्तु तादृशमलमायाकर्मात्मकपाशत्रयं अपक्कमे-
ववर्ततेताननुगृह्य परमेश्वरः तत्तत्कर्मानुरूपान् दिव्यान्
भोगान् अनुभावयति.

प्रोच्यंतेहि—

बद्धानशेषानपरान् विनियुङ्क्ते भोगभुक्तये पुंसः ।
तत्कर्मणामनुगमादित्येवं कीर्तिताःपशवः ॥ इति.

तएते पक्कपाशत्रयाअपक्कपाशत्रयाश्चेति द्विविधाअ-
पि सकलाइति ज्ञेयाः. इत्यादिज्ञेयं.

(शुद्धाद्वैतनिरूपणं).

एकेच येचयेच अमानित्वादम्भित्वादिकमत्यजन्तः,
यमनियमादिसाधनसमन्विताः, श्रीकृष्णःपरमात्मैव स-

कलजगदाद्यकारणं निमित्तकारणंचेति निश्चिन्वानाः, किञ्च—

*एतेचांशकलाः पुंसः कृष्णस्तु भगवान्स्वयं ।

इत्यादिवचनानुसारेण श्रीकृष्णस्यांशित्वमवधार्य गोपीभिः †(स्वरूपदर्शनमात्रार्थं प्रार्थितेनभगवता यद्वृन्दावनादि दर्शितं तेन वृन्दावनादियुक्तसामग्रीविशिष्टमेव सदा भगवद्रूपं) इत्यनुसन्दधानाः, श्रीमन्मथुराधीश्वरचरणसरसिजमधुकरायमाणमानसाः, तत्कथाश्रवणतन्नामकीर्तनतदाराधनादिभिः दृढतरभक्तिमार्गप्रवर्धनैकप्रवीणाः, श्रीकृष्णश्शरणंममेत्यावर्तयन्तः,

‡कर्मणा मनसा वाचा श्रीकृष्णंहि भजन्ति ये ।
सम्प्रदायिगुरोर्वाक्यात्तेविष्णोर्नकलेर्नराः ॥

§यस्य देवे पराभक्तिः यथादेवे तथागुरौ ।
तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः ॥

इत्यादिवचनानुसारेण श्रीमद्वल्लभाचार्यवर्यवंशमौक्तिकायमानेषु स्वगुरुषु भगवतिपरमात्मनीव परमभक्तिभावेन धनंमनस्तनूमपि समर्पयन्तः,

---

*प्राभंजने. उत्तरभागे. पुट. १९१. †१९३.

‡प्राभंजने पूर्वभागे. पु. २०. स्कान्दवचनं.

§श्वेताश्वतरोपनिषदि. अ. ६.

*नज्ञानं नचवैराग्यं प्रायश्श्रेयो भवेदिह ।
भक्त्याहमेकया ग्राह्यः ० ॥

†ब्रह्मभूतःप्रसन्नात्मा नशोचति नकांक्षति ।
समस्सर्वेषुभूतेषु मद्भक्तिं लभते परां ॥

इत्यादिवचननिचयमुख्यत्वानुसारेण तत्त्वज्ञानवैराग्याभ्यां मुमुक्षुर्वीतशोकीभूय ब्रह्मभावमाप्नोति ततः पराभक्तिर्जायते ततः पुरुषोत्तमे प्रवेशरूपामुक्तिर्भवति अतस्तत्त्वज्ञानस्यापि परंपरयैव मोक्षकारणत्वमिति मन्यमानाः,

‡कामाद्गोप्यो भयात्कंसो द्वेषाच्चैद्यादयोनृपाः ।
सम्बन्धाद्वृष्णय स्स्नेहाद्यूयं भक्त्यावयं नृप ॥

इत्यादिवचनानुसारेण भगवद्विषयकसकलभावानामपि मोक्षसाधकत्वमवगम्य पुष्टिमार्गेणच तत्तद्भोगाननुभवन्तः, वासुदेवस्सर्वमिति सर्वत्र श्रीकृष्णमेव भावयन्तश्च भवन्ति, तेच राजयोगिनः, सकलसांसारिकदुःखविनिर्मुच्यमानतया ब्रह्मभूतास्सन्तः, दिव्यगोवर्धनपरिसरपरिशोभितं दिव्ययमुनाझरीपरीतं दिव्यगोबृन्द-

---

*प्राभंजने. पूर्वभागे. पु. १२८. †गीतायां. अ. १८.

‡युधिष्ठिरंप्रतिनारदवचनं शिशुपालवधे अन्तिमसर्गे अन्तिमश्लोकव्याख्याने लिखितं.

वृन्दावनादिसमग्रसामग्रीसमुद्भासितं गोकुलवैकुंठादि-पदवेदनीयंच भगवत्स्वरूपभूतं अप्राकृतं परमपदमुपेत्य श्रीकृष्णमनुप्रविश्य परममुक्ताःगोप्यइव तेनपुरुषोत्तमेन सह विहरमाणाश्चभूत्वा परमपुरुषवदेव नित्यानन्दम-नुभवन्ति. इत्यादि ज्ञेयं.

प्रतिपाद्यतेहि मुक्तस्वरूपं—

*(सर्वात्मभावानन्तरं ब्रह्मस्वरूपप्राप्तिः. सच गो-पीनामेव मुख्यः. तासां भगवत्प्रेम्णा सर्वस्मिन् भगवत-एव भानात्. ततश्च सोऽश्नुतेसर्वान्कामान्सहब्रह्मणा-विपश्चितेतिश्रुतिप्रतिपादितः पुरुषोत्तमनश्रीकृष्णेनसह सर्वकामभोगइति.)

अन्यत्सर्वं प्रायशः वैष्णवविशिष्टाद्वैतवदेवबोध्यं.

एवमन्येचकेचित् भक्त्यैकप्रधानाः वैष्णवविशिष्टाद्वैत-भेदाः शैवविशिष्टाद्वैतभेदाः द्वैतभेदाश्च ज्ञेयाः.

तथाच अद्वैतं विशिष्टाद्वैतं द्वैतंचेति त्रिविधमेवमतं प्राधान्येन दरीदृश्यते

अद्वैतंनाम द्वयोर्भावः द्विता द्वितैवद्वैतं नंविद्यतेद्वैतं सजातीयोविजातीयस्स्वगतोवा भेदः यस्य तदद्वैतं शुद्धबु-

*प्राभंजने उत्तरभागे पुट. १९२.

द्धमुक्तस्वरूपंब्रह्मेत्यर्थः. श्रूयतेहि—*एकमेवाद्वितीयमित्यादि. तथाच यथाहि वृक्षस्य सजातीयंवृक्षान्तरमस्ति विजातीयंघटपटादिकमस्ति स्वात्मकंपत्रशाखादिकमस्ति तथा सकलजगदात्मकस्यब्रह्मणः सजातीयंविजातीयंस्वात्मकंवा द्वितीयमतिरिक्तंवस्तु नास्तीतिज्ञेयं. तादृशमद्वैतंब्रह्मतावत् सर्वत्र सर्वदा परिपूर्णत्वेनविद्यमानत्वात् अद्वितीयत्वाच्च देशकालवस्त्वपरिच्छिन्नमिति त्रिविधपरिच्छेदशून्यमिति ध्वंसात्यन्ताभावान्योन्याभावात्मकाभावत्रयरहितमितिच प्रतिपाद्यते. तादृशब्रह्मविषयकंमतमपि अद्वैतमिति व्यपदिश्यते.

विशिष्टाद्वैतंनाम विशिष्टयोरद्वैतं विशिष्टाद्वैतमितिव्युत्पत्तया सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्टस्य च वासुदेवस्य एकत्वेनाभेदः. चिदचितौनाम चेतनाचेतनात्मकौज्ञेयौ. तथाच चेतनाचेतनात्मकस्य सर्वस्यापिप्रपंचस्य भगवच्छरीरभूततया सृष्टेःपूर्वं भगवान्वासुदेवः सूक्ष्मचिदचिद्विशिष्टोभवति सृष्टौपुनः स्थूलचिदचिद्विशिष्टोभवति अतः बाल्यतनुविशिष्टस्य यौवनशरीरविशिष्टस्यच चैत्रस्य एकत्वेन यथाअभेदः तद्वदितिज्ञेयं. शैवविशिष्टाद्वैतरीतिरपि प्रायशःएवमेवबोध्या.

---

*छान्दोग्ये प्र. ६. ख. २.

द्वैतंनाम द्वयोर्भावः द्विता द्वितैवद्वैतमितिव्युत्पत्त्या जीवेश्वरयोः जडेश्वरयोः जडजीवयोः तत्तज्जीवानां तत्तज्जडानांच परस्परभेदः.

प्रोच्यतेहि—

*जीवेश्वरभिदाचैव जडेश्वरभिदातथा ।
जीवभेदोमिथश्चैव जडजीवभिदातथा ॥
मिथश्चजडभेदोयः प्रपंचोभेदपंचकः । इति.

(तत्तन्मतभेदकारणप्रदर्शनं).

अत्रेदंबोध्यं—

एतेकिल दृश्यमानाः सर्वेपि ब्राह्मणाः श्रौतस्मार्तकर्मानुष्ठानशीलतया एकविधाएव. तषुयेच शिवेभक्ताः तेतावत् शैवाइत्युच्यन्ते. येचविष्णौभक्ताः तेतावत् वैष्णवाइत्यभिधीयन्ते. येचउभयदेवतासाम्यभाविनः तेतावत् तथाउभयथापि विशेषव्यवहारान् नप्राप्नुवन्ति. एषांसर्वेषामपि श्रुतिस्मृतिपुराणादिग्रन्थाः एकविधाएवभवन्ति. तत्त्वज्ञानोपयोगीभूतगीतोपनिषद्ब्रह्मसूत्रात्मकप्रस्थानत्रयमपि एकविधमेव वर्तते. एवंस्थिते—

एकशतोनद्विसहस्रवर्षेभ्यःपूर्वं श्रीमच्छंकरभगवत्पादाचार्याः श्रुतिस्मृतिपुराणाद्यर्थान् संगृह्य ब्रह्मसूत्रादि-

---

*महाभारततात्पर्यनिर्णये. अ. १.

भाष्याणिविधाय, श्रीमत्कुमारिलाख्यभट्टपादाचार्यैः कब-
ळितावशिष्टान्यंकुरितानिच श्रुतिविरुद्धसंप्रदायानुसारी-
णि नास्तिकपाषंडादीनां मतानि खंडयित्वा शैवविशि-
ष्टाद्वैतसंप्रदायादिप्रवर्तकान् नीलकण्ठभाष्याचार्यादीनपि
निर्जित्य तदानीन्तनान् सर्वानपि अद्वैतसिद्धान्तबद्धाद-
रानकार्षुः.

अष्टशतवर्षेभ्यःपूर्वं श्रीमद्रामानुजाचार्यवर्यास्तावत्
शंकरभगवत्पादाचार्यप्रदर्शितार्थापेक्षया विभिन्नेनप्रका-
रेण श्रुतिस्मृतिपुराणादीनां अर्थान् प्रकाश्य पांचरात्रा-
गमाद्यर्थांश्च संगृह्य ब्रह्मसूत्रादिभाष्याणि विधाय अवशि-
ष्टान्यंकूरितानिच बौद्धजैनादिमतानि खंडयित्वा कांश्चि-
ज्जनान् वैष्णवविशिष्टाद्वैतसिद्धान्तबद्धादरानकुर्वन्.

सप्तशतवर्षेभ्यःपूर्वं श्रीमदानन्दतीर्थभगवत्पादाचार्याः
तदुभयप्रकाशितार्थापेक्षया अपरेणप्रकारेण श्रुतिस्मृति-
पुराणादीनां अर्थान् प्रकाश्य पांचरात्रागमाद्यर्थांश्च संगृ-
ह्य ब्रह्मसूत्रादिभाष्याणि विधाय कांश्चिज्जनान् द्वैतसिद्धा-
न्तबद्धादरानतानिषुः.

चतुश्शतवर्षेभ्यःपूर्वं श्रीमद्वल्लभाचार्याः श्रुतिस्मृत्या-
दीनामितरेणप्रकारेण अर्थान्प्रकाश्यब्रह्मसूत्रादिभाष्याणि
विधाय कांश्चिज्जनान् शुद्धाद्वैतसिद्धान्तबद्धादरानतानिषुः

शुद्धाद्वैतंनाम शुद्धयोः अविद्योपाधिरहितजीवस्य मायोपाधिरहितश्रीकृष्णरूपब्रह्मणश्च अद्वैतमत्यन्तसादृश्यरूपाभेदः.

एवमन्येचकेचित्केचिद्भाष्यकाराः तत्तद्भाष्याणि तत्तन्मतानिच्च सन्ति संभवेयुश्च.

तत्तत्कालेषु अन्येच येचयेच क्षत्रियादयस्त्रयोवर्णाः तेपि पूर्वोक्तानि तत्तन्मतान्येव यथाभिलषितं अनुसस्रुः.

तथाच तत्तद्भक्तिभावनाद्युपायानुसारतः तत्तद्भाष्यकारभाषितभाष्ययन्त्रनियन्त्रितोयं तत्तन्मतभेदप्रकारः. इत्यादिज्ञेयं.

(फलितार्थकथनं).

तथाच येचयेच भगवन्तं परमात्मानं यथायथोपासते तैस्तैः स्वस्वभावनाबलात् तादृशंतादृशं फलमवाप्यते. तत्रापि येचयेच कष्टतरैरुपासनैः भगवत्स्वरूपमभिजानन्ति तेतेजनाः स्वयमनिर्वचनीयं पदमुपेत्य न पुनरावर्तन्ते. येचपुनः तादृशकष्टतरोपासनायामसमर्थास्सन्तः प्रकारान्तरेण भगवन्तमाराधयन्ति तेपिजनाः तंतत्सुकृतफलमनुभवन्तएवसन्तः भगवदनुग्रहवशात् कालक्रमेण परांसिद्धिमुपयास्यन्त्येव.

यितेहि तदेतत्सर्वमपिभगवता—

*ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येनयोगेन कर्मयोगेन चापरे ॥
†अन्येत्वेवमजानन्तश्श्रुत्वान्येभ्यउपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखं ॥
‡येत्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
तेप्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥
क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसां ।
अव्यक्ताहि गतिर्दुःखं देहवद्भिरवाप्यते ॥
येतु सर्वाणिकर्माणि मयिसंन्यस्य मत्पराः ।
अनन्यनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसां ॥
मय्येव मनआधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अतऊर्ध्वं नसंशयः ॥
§योयो यांयां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्यतस्याचलांश्रद्धांतामेव विदधाम्यहं ॥
¶मांच योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥

*गीतायां अ. १३. †१. ‡१२. §७. ¶१४.

W

*अभ्यासयोगयुक्तेन चेतसाऽनन्यगामिना ।
परमंपुरुषंदिव्यं याति पार्थानुचिन्तयन् ॥

†नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ।
प्राप्यपुण्यकृतान्लोका नुषित्वा शाश्वतीस्समाः ॥

शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सन् ॥

अनेकजन्मसंसिद्धस्ततोयाति परांगतिं । इति.

तस्मात् योयोजनः भगवदर्पितचित्तः तदाराधनतत्परः तदाज्ञामनुपालयन् अधर्मान्विमुंचन् स्वधर्मानमुंचन् सन्मार्गैकप्रवृत्तोभवति स संसारसागरनिमग्नोपि क्रमेण भगवदनुग्रहपात्रीभूय कृतकृत्योभवति कृतकृत्योभवतीति सर्वमनवद्यं.

रथीतर सगोत्रस्य राम नाम कवे र्वचः ।
सम्मोदयतुचेतांसिसाधुवासाधुवा सतां ॥

इतिनिवृत्तिधर्मनिरूपणं.

समाप्तोयंग्रन्थः.

ओंतत्सत्.

---

गीतायां * अ. ८. †६.

# अनुमोदपत्रिकाः.

आर्यधर्मप्रकाशिकायां श्रुतिस्मृतीतिहासपुराणेभ्यो-ऽनार्षनाटकचंपूप्रभृतिसंदर्भेभ्यश्च प्रमाणमुद्रया निदर्शनमुद्रयोपदेशमुद्रयाच विषयानादाय. बालोपलालनाय समग्राहिषत कठिनाअप्यर्थास्सारल्येन. आस्तिकदर्शनानांनास्तिकदर्शनानामपि चेहास्ति सर्वदर्शनसंग्रहरीत्या परमसंकुचितार्थनिरूपणं. यदल्पज्ञानामपि कथंचिदर्थावगतिसंभवः. आधुनिकानांवैदेशिकविद्यानुरागिणां देशान्तरीणोपदेशशैलीनिबद्धमहासमादराणां सर्वत्रापि लोकदृष्टरीत्यैवार्थतत्त्वं जिज्ञासमानानाम् अर्वाग्दृशा मवाङ्मनसगोचरेषु शास्त्रैकसमधिगम्येषु स्वर्गापवर्गादृष्टदेवताविग्रहालौकिकसामर्थ्याद्यर्थेषु व्यामोहेनाविश्वासवतां चैतद्देशीयबालानां संग्रहायच अलौकिकाअप्यर्थाः लौकिकहितहेतुतया प्रादर्शिषतात्र. पंचषस्थलेषुपर मियंबालसंग्रहशैली "नपाखण्डीनहैतुकः" इतिमनूक्तिमनुमन्यमानेभ्यो धर्मं सुगूढवर्त्मना गोपायद्भ्यो नातीवरोचते. नहिबाल्येसर्वधर्माणां लौकिकहितहेतुतामवधार्य पुनरनुष्ठानादरा विश्वमतिवैश्वरूप्येण एकेन लौकिकहितहेतुतयोपदिष्टानामप्यर्थानां परेण परमानर्थनिदानतयावगतानां तेषां दूरतएव परिहर्तव्यत्वा-

पातात्. तदत्रोपदेष्टव्यानामर्थाना मार्षरीत्यैवोपदेशः श्रेयसेस्यादल्पमेधसां नान्यथेति. तान्यवश्यं शोध्यान्येवस्थलानीति. यथादूष्यात् (४०पुं०) विनश्येरन् (४७पुं०) इत्यादावापाततोदृष्टे पदाशुद्धिः. तत्तत्कर्मवज्जन्यस्तत्तत्कर्मवांश्चेत्यत्र तत्तज्जातिमज्जन्यइति पूरणीयमित्यादि शुद्धिपत्रेद्वितीयसंस्करणेवा परिवर्तनीयमिति.

काशिकराजकीयसंस्कृतपाठशालायां

कैलासभट्टाचार्यः.

राममिश्रशास्त्री.

गंगाधरशास्त्री.

3rd September 1889.

"True copy"

A. VENIS, M. A., (*Oxon*),

*Principal, Sanskrit College, Banares.*

---

HINDU THEOLOGICAL HIGH SCHOOL,

MADRAS, 18*th February* 1889.

*To*

*M. Ráma Sastri, Mysore.*

DEAR SIR,

I have carefully read through your (manuscript) book entitled "*Aryádharmaprakásika,*" and have great pleasure to inform you that it is based on a very good plan, is quite unsectarian, and is sure to be very useful, as a text-book of Aryan morality and religion, for Hindu Schools and Colleges. It is the result of deep study of and careful researches into, our ancient and sacred books. I congratulate you and those who have encouraged you on the production of such a nice little book. I am ready to introduce it as a text-book in one of the higher classes of the Hindu Theological High School.

Yours sincerely,

R. SIVASANKARA PANDIYAJI, B. A., F. T. S.

---

आर्यधर्मप्रकाशाख्य ग्रंथोयं रामशर्मणा ।
विदुषा सर्वसिद्धांतसारसंग्रहरूपतः ॥ १ ॥
बालानामुपकाराय विदुषांतोषणायच ।
श्रुतिस्मृत्यादिमानाना मविरोधेन निर्मितः ॥ २ ॥
आमूलाग्र मयंसम्य ङ्मया दृष्टःपुनःपुनः ।
एषलोकोपकाराय प्रभवेदिति मेमतिः ॥ ॥ ३ ॥

५-१०-८९. पळमनेरि सुंदरशास्त्रियार्.

---

अयमार्यधर्मप्रकाशिकाख्योग्रंथः देवनागराक्षरैर्मुद्रितपुस्तके मया स्वयमामूलाग्रमालोकितः. अयंग्रंथः सकलमतसाधारणस्सर्वशास्त्रसंमतश्च. किंच व्युत्पित्सूनां व्युत्पन्नानांच नितरामुपयोगजनकः. एवंसुललितेन निर्दुष्टेनच मार्गेण संगृह्य दुरवगाहान्श्रुतिस्मृत्याद्यर्थान् प्रकाशितवंतो॥ वे०॥ मंडिकल् रामशास्त्रिणश्च तत्प्रेरकाश्च श्रीमन्तःसकललोकोपकारकारिणस्संतीति निश्चित्य सुतरामनुमोदामहे.

श्रुतिस्मृत्याद्युक्ताः परमपुरुषार्थस्यपदवी ।
रबुध्वाव्यध्वे ये पदमिहनिधित्सांति मनुजाः ॥
यदीमांलोकंते सकृदपि कृतिं तेकुमतिभिः ।
प्रतार्यंतनैतेकथमपि वयं निश्चिनुमहे ॥ १ ॥

मैसूर् श्रीमन्महाराज चामराजेंद्रस्य आस्थानपंडिताः
२०-११-८९. वें०॥ सीतारामशास्त्रिणः.

---

वेदमूर्ति मैसूरु शारदाविलासपाठशालाध्यक्षैः मंडिकल् रामशास्त्रिभिः निर्मितमार्यधर्मप्रकाशिकाख्यंग्रंथं धयं आद्यन्तं सामस्त्येन सम्यगालोक्य, एषग्रंथः द्वैताद्वैत विशिष्टाद्वैताख्यमतत्रयानुगुण्येनवर्तते, श्रुतिस्मृतिपुराणाद्यविरुद्धश्च, पिपठिषूणांबालानां पिपाठयिषूणां पंडितानांच प्रमोदावहतया सकलजनोपादेय इति दृढमाकलय्यच, सुतरां संतुष्यामः.

श्रीमन्महाराज चामराजेंद्रसार्वभौमसभास्थानपंडित

१५—२—१०. व्यासकृष्णाचार्याः.

---

*To*

K. Seshadri Iyer, Esq., C. S. I.,

*Dewan of Mysore.*

Sir,—We respectfully beg to enclose for your kind perusal a copy of the proceedings of a special meeting held on the 12th instant, at the Srinivasa Mandiram Library, and in doing so we beg leave to state, that the Hindu Students are labouring under a great disadvantage at present for want of a religious and moral instruction in Public Schools, and good text books on the subject are also not available. To supply this long-felt want, one Ráma Sastri, a Pandit of Mysore, has written a book in Sanskrit, a copy of which we beg to forward herewith.

We further beg to inform you that we called a special meeting on the 12th instant in Bangalore, for the purpose of examining the merits of the book, and as will be seen from the enclosed copy of the Proceedings, the members assembled on the occasion were almost unanimously of opinion that the book with slight modifications will answer the purpose very well.

We therefore request that you will be so kind as to have this book examined by competent Sanskrit Pandits, and if

approved it may be ordered to be introduced into all Sanskrit and other schools in the Province.

We beg leave to remain, Sir,
Your most obedient Servants,

Bangalore.

(Signed) Messrs A. Gopalacharlu, S. C. Rungasami Iyer, S Srinivasa Chari, M. Narrain Rao, A. Srinivasacharlu, Pandits Gopala Sastriar, Visweswara Sastriar, Giri Sastriar, and Narasimha Sastriar, and Sriman Kuppanna Iyengar.

---

भोभो आर्यधर्मप्रकाशिकाप्रणेतारः! लोकसुहृदश्च सशिरोंजलिपुटं मदर्पितमिदमस्तु वः संविदितमुत्तरं. यदसंस्तुतमपिमां पात्रभूतमाकलय्य स्वप्रणीतमत्युपयुक्तविषयोपबृंहितंपुस्तकं श्रीमद्भिःप्राहीयत, तत् प्रीतिमतामया कृतज्ञतापूर्वकं शिरसासम्मान्यसंगृहीतं. अवलोकितंच भूयोभूयस्समग्रमक्षरशः. इदंपुस्तकं सांगोपांगस्यसनिमित्तस्यच्चार्यधर्मस्य निधानपेटिकेवास्ति. यतोस्मिन्–लोकमर्यादापालनहेतोःअस्य प्रमाणनिमित्ताद्यारभ्य अल्पैरेवाक्षरैः तदीयप्रवृत्त्याद्यवान्तरभेदानधिकारिणः प्रयोजनानिच सम्यग्विविच्य अन्तेप्रस्थानभेदाअपि उद्देशतोलक्षणतश्च–संक्षिप्यव्यत्रियन्त. तथैव शांकर मध्वरामानुजादिमतानि परस्परविमताधिकारविषयाण्यपि परस्परक्षोदपराहतिवर्जमेव युक्त्याकिंचिदिवविवृत्य अन्ते सर्वाविरुद्धफलितार्थकथनेनोपसंहृतं. अतश्चेदं सर्वेषामार्यधर्माभिमानिनां विदुषांजिज्ञासूनांच संग्रहपात्रभूतमित्यभिप्रैमि. यतोविदुषामपि महतोप्यार्यधर्मसमुद्रस्यातिदीर्घाकरव्यापिनः क्षिप्रबुध्यारोहाय तरंगानुक्रम-

णिकयेव अस्त्येवप्रयोजनमनया. किंच घोरेस्मिन्कलि-
युगे अस्यार्यावर्तस्य धर्मतोवर्णतश्च विभिन्नानामि[illegible]ति-
दूरवर्तिनामांगलभौमानां नीतिमनुवर्तमानयाविक्टोरि-
याचक्रवर्तिन्याराज्यरक्षणिकयाच्च स्वायत्तीकृतत्वात् तथैव
पाश्चात्यनीतिंभाषांकलाश्च शिक्षमाणानांशिक्षितानां तत्त-
त्पदवीधारिणांतामेवचानुवर्तमानानां संख्यायाः अनुदि-
नमेधमानतया स्वाधिकारेऽभ्यासेवाव्यापृतानांतेषां स्व-
धर्माकरग्रंथसमालोकने अप्राप्तावसरतयाच स्वधर्मज्ञान-
वैधुर्येण कालक्रमेणानर्हतानुरोधेन वरमल्पग्रन्थस्यबह्वर्थ-
स्यच निबंधस्यास्य अवलोकनेन स्वधर्मज्ञानसंपादनमि-
ति, तेषामपि तदौपयिकतया अवश्यंजिघृक्षाविषयएवायं.

यद्यप्येतादृशनव्यग्रन्थेषु एतत्कालानुरोधेन आयुर्वेदा-
भिप्रायानुगुणधर्मशास्त्रमूलकबालविवाहपरिवर्जनादेःद्यूत
मद्यादिव्यसनपरिहारस्यच इतोप्यधिकंनिरूपणं इष्टत-
मंस्थितं, तथापि ग्रन्थविस्तरभीत्यनुरोधेन अत्युपयुक्त-
स्यापितादृशविषयस्य स्थलदाने एतद्ग्रन्थकृतां निरुपायतां
विचिंत्य तोष्टव्यं.

सर्वथाप्येतद्ग्रन्थस्य सर्वसंग्रहपात्रतां भूयोभूयस्समु-
द्घुष्य सर्वानार्यान् एतत्पुस्तकावलोकने यावच्छक्तिप्रो-
त्साह्यच विरमामइतिशिवं.

२५–१–१०. गणेशसुब्रायशास्त्री,

गोकर्णसंस्कृतशालामुख्याध्यापकः.

